राजन्यहिंसा नरकः प्रणश्यति नसंशयः ॥ १९० ॥
४ । २ । २४ वेत्यग्रुर्जनिवान्मंत्रं लक्षं चेद्विष्णुमन्दिरे ।
राजसेवायानरकं ज्येष्ठे नश्यत्यसंशयः ॥ १९१ ॥
४ । २ । २४ ज्यायांसमस्यमंत्रंतु धात्र्यां लक्षं जपेद्यदि ।
राजस्त्रीसंगनरकं मार्गशीर्षे विनश्यति ॥ १९२ ॥
४ । २ । २४ समुद्रमासांमंत्रं च बदर्यां त्र्ययुतं जपेत् ।
विनश्यति तदा सत्यं वैश्यस्त्रीसंगकिल्बिषं ॥ १९३ ॥
४ । २ । २४ सहिक्षत्रस्यमंत्रं चजपेच्चाश्वत्थमूलके ।
त्र्ययुतं माघमासेतु शूद्रसेवांहसःक्षयं ॥ १९४ ॥
२ । ६ । २७ अभिभुवेजपेन्मंत्रं त्र्ययुतं श्रावणे यदि ।
विष्णवालये विमुच्येत पापं वैश्यस्य सेवनात् ॥ १९५ ॥
२ । ७ । १० दुःस्वप्ननाशने मंत्रं योमेराजञ्जपेद्यदि ।
अष्टोत्तरंतु साहस्रं ततः सुस्वप्नमेवहि ॥ १९५ ॥
१ । ८ । २३ अघस्वप्नस्य मंत्रं चजपेद्दुःस्वप्ननाशनं ।
अष्टोत्तरंतु साहस्रं जले वाविष्णुमन्दिरे ॥ १९६ ॥
२ । ६ । २७ मंत्रं जपेद्विश्वजिते लक्षं चैत्रे शिवालये ।
क्षेत्रापहारनरकं प्रणश्यति नसंशयः ॥ १९७ ॥
२ । ६ । २७ सत्रासाहोजपेन्मंत्रं लक्षं चेत्फाल्गुने जले ।
रत्नापहारनरकान्मुच्यते नात्र संशयः ॥ १९८ ॥
२ । ६ । २७ अनानुदोजपेन्मंत्रं लक्षं चेद्विष्णुमन्दिरे ।
रत्नवस्त्रं चकार्तिक्यां धनं धान्यं चवर्धते ॥ १९९ ॥
२ । ६ । २७ यज्ञेनगाजपेन्मंत्रं दशवारं दिनेदिने ।
जपेज्जलेवा बिल्वेवा बहुद्रव्यं चविन्दति ॥ २०० ॥

२। ६। २७ इन्द्रश्रेष्ठानिमंत्रं चप्रत्यहं प्रजपेच्छतम्।
त्रिवर्षान्तं व्रती सत्यं सहस्रं विदन्ते वसु ॥ २०१ ॥
४। ७। ३० स्वादुष्किलाजपेन्मंत्रं शतवारं दिनेदिने।
वज्रिणा सह वक्ताच मेदिन्यां कीर्तिमान्भवेत्॥ २०२॥
४। ७। ३० अयंस्वादुर्जपेन्मंत्रं शतवारं दिनेदिने।
राक्षसैः सह वक्ताच तेभ्योभूतिं प्रयातिसः ॥ २०३ ॥
४। ७। ३० अयंमेपीतमंत्रस्य जपं कुर्याच्छतं जले।
दिनेदिने प्रवक्ताच यक्षैः सह सदा भुवि ॥ २०४ ॥
४। ७। ३० अयंसयोजपेन्मंत्रं शतवारं दिनेदिने।
गंधर्वैः सह वक्ताच सौभाग्यं विन्दते भुवि ॥ २०५ ॥
४। ७। ३० अयंविदज्जपेन्मंत्रं शतवारं दिनेदिने।
किन्नरैः सह वक्ताच सौंदर्यं भुवमेतिसः ॥ २०६ ॥
४। ७। ३१ धृषत्पिबजपेन्मंत्रं शतवारं दिनेदिने।
ब्रह्मणा सह वक्ताच ब्रह्मलोके महीयते ॥ २०७ ॥
४। ७। ३१ इन्द्रप्रणोजपेन्मंत्रं शतवारं दिनेदिने।
विष्णुना सह वक्ता सविष्णुलोके महीयते ॥ २०८ ॥
४। ७। ३१ उरुंनःप्रजपेन्मंत्रं शतवारं दिनेदिने।
शिवेन सह वक्ता चशिवलोके महीयते ॥ २०९ ॥
४। ७। ३१ वरिष्ठेनोजपेन्मंत्रं शतवारं दिनेदिने।
किंपुरुषैः सह वक्ता चसुपुत्रंभूतिमेतिसः ॥ २१० ॥
४। ७। ३१ इन्द्रमृळजपेन्मंत्रं शतवारं दिनेदिने।
विन्दते सधनं धान्यं वक्ता विद्याधरैः सह ॥ २११ ॥
४। ७। ११ मन्द्रस्यकवेर्मंत्रं चदिनं प्रति जपेच्छतं।
अप्रियायस्य लोकेषु प्रियास्ते स्युर्जना भुवि॥ २१२ ॥

४ । ७ । ११ अयमुशानोमंत्रं चादिनं प्रति जपेच्छतं ।
मनःशुद्धिं चवाक्शुद्धिं कायशुद्धिं चविन्दति ॥ २१३ ॥
४ । ७ । ११ नूगृणानोजपेन्मंत्रं शतवारं दिनेदिने ।
अणिमादिमहासिद्धिं लब्ध्वा लोके प्रपूज्यते ॥ २१४ ॥
४ । ७ । १२ इन्द्रपिबजपेन्मंत्रं शतवारं दिनेदिने ।
पितृभक्तिस्तु पुत्रस्य ह्यबुद्धिस्तु विनश्यति ॥ २१५ ॥
४ । ७ । १२ अस्यपिबजपेन्मंत्रं शतवारं दिनेदिने
भ्रातृस्नेहोवर्धतेच विस्नेहोनास्ति सर्वथा । ॥ २१६ ॥
३ । ७ । १० दिनेदिनेष्टसाहस्रं जपेन्मंत्रमपादितः ।
वत्सरांते भोग्यभोगान्धनं भूमिंच विन्दति ॥ २१७ ॥
४ । ७ । १० दूराच्चिदाजपेन्मंत्रं लक्षं माघे जले यदि ।
गृहस्थधर्मलोपस्य प्रायश्चित्तं तदेवहि ॥ २१८ ॥
४ । ७ । १० तंवोधियाजपेन्मंत्रं लक्षं चैत्रे शिवालये ।
ब्रह्मचारी स्वधर्मस्य न्यूनंचेत्पूर्णमेव तत् ॥ २१९ ॥
४ । ७ । १० वर्धाघंच जपेन्मंत्रं कार्तिक्यां विष्णुमन्दिरे ।
वानप्रस्थाश्रमे कर्मन्यूनं संपूर्णतामियात् ॥ २२० ॥
४ । ७ । १० एवाजज्ञानमंत्रंच जपेल्लक्षंतु फाल्गुने ।
नष्टक्षेत्रं नष्टधनं पुनरायाति सर्वथा ॥ २२१ ॥
४ । ५ । १८ समिद्धमग्निं मंत्रंच दिनं प्रति जपेच्छतं ।
मानसीदेवतापूजा लभते नात्र संशयः ॥ २२२ ॥
४ । ७ । १२ आयाहिशश्वन्मंत्रंच दिनं प्रति जपेच्छतं ।
वाचिकीं देवतापूजां लभते नात्र संशयः ॥ २२३ ॥
४ । ७ । १२ यदिन्द्रदिविमंत्रंच दिनं प्रति जपेच्छतं ।
कायिकीं देवतापूजां लभते नात्र संशयः ॥ २२४ ॥

८।७।२२ प्रोष्वस्मैतु जपेत्सूक्तं लक्षद्वादशकं जले।
गुप्तपापं विनश्येत चैत्रादौ फाल्गुनावधि ॥ २२५ ॥
४।७।१३ अहेळमानोमंत्रंच दिनं प्रति जपेच्छतं।
शास्त्रेषु संशयोनास्ति विश्वासः सर्वथा भवेत् ॥ २२६ ॥
४।७।१३ यातेकाकुज्जपेन्मंत्रं शतवारं दिनेदिने।
विपरीतं नशास्त्रेषु यथार्थं दृश्यते सदा ॥ २२७ ॥
४।७।१३ एषद्रप्सोजपेन्मंत्रं शतवारं दिनेदिने।
भ्रान्तिबुद्धिर्न शास्त्रेषु यथार्थं दृश्यते सदा ॥ २२८ ॥
४।७।१३ सुतःसोमोजपेन्मंत्रं शतवारं दिनेदिने।
अन्यार्थोनच शास्त्रेषु यथार्थता चदृश्यते ॥ २२९ ॥
४।७।१३ ह्वयामसि जपेन्मंत्रं शतवारं दिनेदिने।
व्यासोक्तेच पुराणार्थे यथार्थताच दृश्यते ॥ २३० ॥
४।७।१४ प्रत्यस्मै प्रजपेन्मंत्रं शतवारं दिनेदिने।
महाकाव्येषु विश्वासमविश्वासं नसर्वथा ॥ २३१ ॥
४।७।१४ एमेनं प्रजपेन्मंत्रं शतवारं दिनेदिने।
स्मृत्यर्थेनान्यथा बुद्धिर्यथार्थं पश्यति द्विजः ॥ २३२ ॥
३।२।१२ प्रपर्वतानां सूक्तंतु जपेल्लक्षं जले यदि।
बिल्वेवा पापनाशश्च ततोभूतिमवाप्नुयात् ॥ २३३ ॥
४।७।१४ यदीसुतेभिर्मंत्रंच विंशद्वारं जपेद्यदि।
अनुमासिकेषु योभुंक्ते पातकान्मुच्यते तदा ॥ २३४ ॥
३।२।११ अहन्नहिंपरिशियानं पंचविंशज्जपदृंचे।
न्यूनेतु मासिके भुंक्ते तस्माद्दोषान्नलिप्यते ॥ २३५ ॥
३।२।११ यन्नोहितेजपेन्मंत्रं विंशद्वारं शिवालये।
अब्दमोक्षंतु योभुंक्ते तदा पापात्प्रमुच्यते ॥ २३६ ॥

१ । २ । ७ तद्विप्रासोजपेन्मंत्रं शतवारं दिनेदिने ।
अन्तकाले महाविष्णुं स्मरेत्किंचिन्न सर्वथा ॥ २३७ ॥
१ । २ । ७ अतोदेवाइति मंत्रं दिनंप्रति जपेच्छतं ।
वासं याति महाविष्णोर्विष्वक्सेनादिभिः सह ॥ २३८ ॥
१ । २ । ७ इदंविष्णुर्जपेन्मंत्रं शतवारं दिनेदिने ।
जयादीनांतु संयुक्तस्ततः सारूप्यमेति सः ॥ २३९ ॥
१ । २ । ७ त्रीणिपदाजपेन्मंत्रं शतवारं दिनेदिने ।
सान्निध्यमेति विष्णोश्च वैनतेयादिभिः सह ॥ २४० ॥
१ । २ । ७ विष्णोःकर्माणिमंत्रं चदिनं प्रति जपेच्छतं ।
सायुज्यादिमहाविष्णोर्विष्वक्सेनादिभिः सह ॥ २४१ ॥
२ । ७ । १९ धारावराजपेन्मंत्रं शतवारं जले यदा ।
स्वप्नेन्द्रियंच द्रवतिमुच्यते पातकाद्विजः ॥ २४२ ॥
२ । ७ । १९ द्यावोनस्तृभिर्मंत्रंच यदा धात्र्यां शतं जपेत् ।
रेतः पतेद्विमेदिन्यां तदा पापात्प्रमुच्यते ॥ २४३ ॥
२ । ७ । १९ उक्षंते प्रजपेन्मंत्रं शतवारं दिनेदिने ।
स्वस्त्रियामनृतौ गन्ता तस्मात्पापात्प्रमुच्यते ॥ २४४ ॥
२ । ७ । १९ पृक्षेताविश्वामंत्रंतु बदर्यां प्रजपेच्छतं ।
दिवास्वस्त्रीषु संगस्य तदा मुच्येत किल्बिषात् ॥ २४५ ॥
२ । ७ । १९ इन्धन्वभिर्जपेन्मंत्रं त्र्ययुतं किल्बिषंनहि ।
रजस्वलास्वभार्यायाः संगश्चेन्नात्र संशयः ॥ २४६ ॥
२ । ७ । २० आनोब्रह्माणिमंत्रंतु शतं दोषोजपेन्नहि ।
स्वभार्यासंगकालेतु परस्त्रीस्मरणं यदा ॥ २४७ ॥
२ । ७ । २० तन्नोदातजपेन्मंत्रं लक्षं पापं नसर्वथा ।
प्रजावत्याः संगमश्च ज्ञानतोज्ञानतोयदा ॥ २४८ ॥

२ । ७ । २० यद्युंजते जपेन्मंत्रं धात्र्यां पंचायुतं यदि ।
कनिष्ठभ्रातृभार्यायाः संगमे किल्बिषं नहि ॥ २४९ ॥
२ । ७ । २० योनोमरुतोमंत्रंच बदर्यां लक्षकं जपेत् ।
दोषात्प्रमुच्यते सत्यं श्वश्रूणां संगमोयदि ॥ २५० ॥
२ । ७ । २० चित्रंतद्वोजपेन्मंत्रमश्वत्थे लक्षकं द्विजः ।
मातृष्वसुः संगदोषः प्रणश्यति न संशयः ॥ २५१ ॥
२ । ७ । २१ तान्वोमह्रोजपेन्मंत्रं शतवारं दिनेदिने ।
विन्दतेच धनं धान्यं सुकीर्तिं ब्रह्मवर्चसं ॥ २५२ ॥
२ । ७ । २१ तेदशग्वाजपेन्मंत्रं शतवारं दिनेदिने ।
अन्तकाले विष्णुतेजोलभते नात्र संशयः ॥ २५३ ॥
२ । ७ । २१ तेक्षोणीभिर्जपेन्मंत्रं त्र्ययुतं विष्णुमन्दिरे ।
यतमानस्य दानस्य चैत्रे दोषोनविद्यते ॥ २५४ ॥
२ । ७ । २१ ताँइयानोजपेन्मंत्रं जले यदि सहस्रकं ।
उत्क्रान्ते यस्यदानस्य किल्बिषं नास्ति सत्यतः॥२५५॥
२ । ७ । २१ ययारध्रं जपेन्मंत्रं सहस्रंतु शिवालये ।
गोदानस्य विमुच्येत वैतरण्याश्च किल्बिषात् ॥ २५६ ॥
४ । ७ । ६ संचत्वेतुजपेत्सूक्तं बदर्यां किल्बिषं नहि ।
प्रायश्चित्तं माघमासे त्र्ययुतं स्वीकरोति चेत् ॥ २५७ ॥
७ । ७ । ६ कुहश्रुतोजपेत्सूक्तमश्वत्थे नरकोनहि ।
ब्रह्मदंडंच गृह्णाति मार्गशीर्षे सहस्रकम् ॥ २५८ ॥
५ । ४ । १७ स्नायाद्याः प्रवतोजप्त्वा चेमंमेगंगइत्यपि ।
८ । ३ । ६ वापीकूपतडागादिनदीषु प्रार्थनंत्विदं ॥ २५९ ॥
६ । ३ । ४० अग्निःशुचिर्जपेन्मंत्रं शतवारं जले नहि ।
पिशाचोद्देशभुक्तानि भुंजते भूसुरास्तदा ॥ २६० ॥

४ । ७ । ४ अपूर्व्याभजपेत्सूक्तं शतवारं दिनेदिने ।
विष्णवालये जले वापि क्रतूनां लभते फलं ॥ २६१ ॥

८ । ३ । २८ सम्राज्ञीतु जपेन्मंत्रं शतवारं दिनेदिने ।
पतिव्रता स्वभार्या सा दृष्टादृष्टप्रवर्धिनी ॥ २६२ ॥

८ । ३ । २३ सुकिंशुकं जपेन्मंत्रं शतवारं दिनेदिने ।
जननं मरणं नास्ति ततः सायुज्यमेतिसः ॥ २६३ ॥

८ । ३ । २८ इमांत्वमिन्द्रमंत्रं चदिनं प्रति जपेच्छतं ।
लभेत्पुत्रान् भाग्यवतोविदुषोदीर्घजीविनः ॥ २६४ ॥

८ । ३ । २८ समंजन्तुजपेन्मंत्रं शतवारं दिनेदिने ।
दंपत्योः प्रेममैत्रीच ज्यायसी ननिवर्तते ॥ २६५ ॥

७ । २ । १९ प्रदेवमच्छासूक्तंच जपेद्दश दिनेदिने ।
तद्गेहे गोधनं सत्यं धनंधान्यं चवर्धते ॥ २६६ ॥

२ । १ । १० दक्षिणावतामंत्रंच दिनं प्रति जपेच्छतं ।
भुवि स्थित्वा सुखं भुंक्ते परोक्षे विष्णुमाप्नुयात् ॥ २६७ ॥

८ । १ । ५ अहंभुवं जपेत्सूक्तमेकवारं यदा तदा ।
चौर्यहत्त्यादिकात्पापान्मुच्यते नात्रसंशयः ॥ २६८ ॥

५ । ४ । २४ शुचीवस्तुजपेन्मंत्रं शतवारं दिनेदिने ।
स्पृष्टास्पृष्टं नदोषोस्ति शुचिर्भवति तत्क्षणात् ॥ २६९ ॥

३ । १ । २७ अग्निरस्मि जपेन्मंत्रं शतवारं दिनेदिने ।
नाभिंस्पृष्ट्वा भोजनान्ते दीपनं पाचनं भवेत् ॥ २७० ॥

३ । ३ । २८ उषसःपूर्वासूक्तंतु जपेल्लक्षं शिवालये ।
दत्तभूम्यपहारश्च नदोषश्चैव फाल्गुने ॥ २७१ ॥

८ । १ । ३० अधागावोजपेन्मंत्रं लक्षं बिल्वे शिवालये ।
क्षेत्रापहारनरकः प्रणश्यति न संशयः ॥ २७२ ॥

८।१।३० अधत्वमिन्द्रमंत्रंच प्रजपेच्छतलक्षकं ।
सत्पात्रदत्तदानेन पश्चात्तापोन दोषभाक् ॥ २७३ ॥
८।१।३० अधयद्राजानामंत्रंच त्र्ययुतं फाल्गुनेजपेत् ।
यस्मादुद्दिश्य दानंतु तस्मै दत्तंनकिल्बिषं ॥ २७४ ॥
१।७।५ अपनस्तुजपेन्मंत्रं सहस्रंवै जलेपिवा ।
अज्ञातिभ्योग्निदानंच लिप्यते नैव किल्बिषात् ॥ २७५ ॥
४।२।१९ तमुष्टुहिजपेन्मंत्रं त्रिवारंच दिनेदिने ।
श्रीरुद्रस्यतु यत्पुण्यं तत्पुण्यं विन्दते जपात् ॥ २७६ ॥
८।७।१ तदिदासजपेन्मंत्रं शतवारं दिनेदिने ।
मंत्रराजसमं सत्यं भुक्तिमुक्तिफलप्रदं ॥ २७७ ॥
८।७।१ तदिदासजपेत्सूक्तं शतवारं दिनेदिने ।
नवतिःकोटिमंत्रैश्च यत्फलं लभते हितत् ॥ २७८ ॥
१।५।२९ इत्थाहिप्रजपेत्सूक्तं शतवारं दिनेदिने ।
सुखेन भुंक्तेस्वहगृे पुत्रपौत्रादिभिः सह ॥ २७९ ॥
२।७।७ सुगोहिवोजपेन्मंत्रं शतवारं दिनेदिने ।
हृदुःखं नाशयेत्सर्वं सुखं सर्वत्र सर्वदा ॥ २८० ॥
२।७।७ पिपर्तुनोजपेन्मंत्रं शतवारंदिनेदिने ।
शत्रुभ्यश्चागतं दुःखंनस्पृशेत्सर्वथा नरः ॥ २८१ ॥
२।६।१ विधेमते जपेन्मंत्रं शतवारं दिनेदिने ।
कुर्यादेवाविचारेण अग्निपूजां दिनंप्रति ॥ २८२ ॥
१।६।३० इमंस्तोममर्हतेसूक्तं जपेच्चेत्र्ययुतंहरौ ।
पित्रोर्विना ब्रह्मचारी वह्निदश्चेन्नपातकम् ॥ २८३ ॥
७।८।९ उषासानक्तासूक्तंतुजपेद्दशजलेपिवा ।
प्रमादाज्ञानतोभुंक्ते सूतकान्नंनदोषभाक् ॥ २८४ ॥

७ । ८ । २१ समानमुत्यं मंत्रंच सहस्रंतु यदाजपेत् ।
शूद्रान्नंज्ञानतोभुंक्ते प्रमादाद्दानकिल्बिषम् ॥ २८५ ॥
७ । ८ । २१ प्रातर्युजा जपेन्मंत्रमयुतं चेन्नपातकम् ।
रजस्वलान्नं योभुंक्ते ज्ञानतोज्ञानतोपिवा ॥ २८६ ॥
७ । ८ । २१ अध्वर्युवाजपेन्मंत्रं सहस्रं विमले जले ।
गणकान्नं नरोभुंक्ते विमुच्येत सकिल्बिषात् ॥ २८७ ॥
७ । ८ । २२ अस्तेवसुजपेन्मंत्रं सहस्रं वैनकल्मषं ।
प्रमादाज्ज्ञानतोभुंक्ते पतितान्नं यदा तदा ॥ २८८ ॥
७ । ८ । २२ दोहेनगां जपेन्मंत्रमयुतं चेन्न कल्मषं ।
ज्ञानतोज्ञानतोभुंक्ते पतितान्नं यदा तदा ॥ २८९ ॥
७ । ८ । २२ किमंगत्वाजपेन्मंत्रमयुतं चेज्जले सुधीः ।
ज्ञानतोज्ञानतोभुंक्ते कुष्ठयन्नं नैव कल्मषम् ॥ २९० ॥
७ । ८ । २२ आजनायजपेन्मंत्रं शतवारं शिवालये ।
क्षत्रियान्नं यदा भुंक्ते तदा पापात्प्रमुच्यते ॥ २९१ ॥
७ । ८ । २२ धनंनस्पंद्रंमंत्रंतु शतपंच जले जपेत् ।
भुंक्ते यदातु वैश्यान्नं तदा पापात्प्रमुच्यते ॥ २९२ ॥
७ । ८ । २३ यस्मिन्वयं जपेन्मंत्रं शतवारं दिनेदिने ।
सदा परान्नभोक्ताच मुच्यते तेन किल्बिषात् ॥ २९३ ॥
७ । ८ । २३ आशच्छत्रुंजपेन्मंत्रं शतवारं दिनेदिने ।
मेदिनीं कांचनं गाश्च लभते शत्रुतोनरः ॥ २९४ ॥
७ । ८ । २३ प्रथमंतश्चतुर्मंत्रान्तदा दश जले जपेत् ।
वर्णातीतान्नभोक्तासौ तस्मात्पापात्प्रमुच्यते ॥ २९५ ॥
३ । ६ । ५ आयात्विन्द्रोजपेत्सूक्तमेकवारं शिवालये ।

४

भुंक्तेभोक्ता ब्रह्मवधे विमुच्येत यदा तदा ॥ २९६ ॥
७ । ८ । २४ अच्छामइन्द्रं सूक्तं तदेकवारं दिनेदिने ।
विधुरान्नं यदा भुंक्ते तदा पापात्प्रमुच्यते ॥ २९७ ॥
७ । ८ । २८ दिवस्परिजपेत्सूक्तमेकवारं जले शुचौ ।
पर्यायान्नं यदा भुंक्ते तदा पापाद्विमुच्यते ॥ २९८ ॥
४ । ३ । २४ प्रवःस्पळक्रं जपेत्सूक्तं विप्रोविष्णवालये दश ।
जारिण्यन्नंच भुक्तंच तदा पापात्प्रमुच्यते ॥ २९९ ॥
४ । ३ । २४ अमादेषां जपेन्मंत्रं दशवारं शिवालये ।
उदकुंभं सदा भुंक्ते कल्मषान्मुच्यते तदा ॥ ३०० ॥
४ । ३ । २४ गवामिव जपेन्मंत्रं शतवारं शिवालये ।
कुंडान्नंतु यदा भुंक्ते तदा पापात्प्रमुच्यते ॥ ३०१ ॥
४ । ३ । २४ कोवोमहान्ति मंत्रंच शतवारं जपेद्बुधः ।
गोलकान्नं यदा भुंक्ते तदा पापात्प्रमुच्यते ॥ ३०२ ॥
४ । ३ । २४ अश्वाइव जपेन्मंत्रं दशवारं जले यदा ।
नित्यश्राद्धं यदा भुंक्ते तदा पापात्प्रमुच्यते ॥ ३०३ ॥
४ । ३ । ४४ तेअज्येष्ठाजपेन्मंत्रं दश विष्णवालये सकृत् ।
दिवा द्विर्भोजनं भुक्त्वा किल्बिषाच्चैव सर्वदा ॥ ३०४ ॥
४ । ३ । २४ मिमातुद्यौर्जपेन्मंत्रं शतवारं शिवालये ।
भार्यायुक्तोयदा भुंक्ते तदा मुच्येत किल्बिषात् ॥ ३०५ ॥
४ ।। ३ २५ ईळेअग्निं जपेन्मंत्रं दशवारं यदा तदा ।
पंचयज्ञविहीनस्य गृहे भुंक्ते नपातकम् ॥ ३०६ ॥
४ । ३ । २५ आयेतस्थुर्जपेन्मंत्रं दश वै विष्णुमंदिरे ।
हस्ते दत्तं यदा भुंक्ते तदा पापात्प्रमुच्यते ॥ ३०७ ॥
४ । ३ । २५ पर्वतश्चिज्जपेन्मंत्रं शतवारं नकल्मषं ।

यत्यन्नं तु यदा भुंक्ते पात्रस्थं प्रेरितं यदा ॥ ३०८ ॥
४ । ३ । २५ वराइवेजपेन्मंत्रं शतवारं यदा तदा ।
बहवश्चैकपात्रेतु भुंजते चेन्न कल्मषं ॥ ३०९ ॥
४ । ३ । २५ अज्येष्ठासोजपेन्मंत्रं दशवारं नकल्मषं ।
श्वादीनां दर्शनं कृत्वा पश्चाद्भुंक्ते यदा तदा ॥ ३१० ॥
४ । ३ । २५ यदुत्तमेजपेन्मंत्रं दशवारं यदा तदा ।
रजस्वलाध्वनिं श्रुत्वा पश्चाद्भुंक्ते नकिल्बिषं ॥ ३११ ॥
४ । ३ । २५ अग्निश्चयज्जपेन्मंत्रं दशवारं विशेषतः ।
अंत्यजानां ध्वनिं श्रुत्वा पश्चाद्भुंक्ते नपातकम् ॥ ३१२ ॥
४ । ४ । २५ अग्नेमरुद्भिर्मंत्रंच किल्बिषं न शतं जपेत् ।
भुंजते सहपात्रेतु बहवोब्रह्मचारिणः ॥ ३१३ ॥
४ । ३ । २६ केष्ठानरोजपेत्सूक्तमेकवारं प्रशस्तकं ।
मन्वादिश्राद्धभोक्ताच तदा पापात्प्रमुच्यते ॥ ३१४ ॥
४ । ३ । ३० कृतेनकृतं सूक्तंच एकवारं जपेद्बुधः ।
युगादिश्राद्धभोक्ताच तदा पापात्प्रमुच्यते ॥ ३१५ ॥
४ । ३ । २३ तमुनूनं जपेन्मंत्रं दशवारं शिवालये ।
अष्टकाश्राद्धभोक्ता चतदा पापात्प्रमुच्यते ॥ ३१६ ॥
४ । ३ । २३ त्वेषंगणंजपेन्मंत्रं दशवै विष्णुमन्दिरे ।
व्यतीपाते यदा भुंक्ते तदा पापात्प्रमुच्यते ॥ ३१७ ॥
४ । ३ । २३ आवोयंतु जपेन्मंत्रं दशवारं विनागुरोः ।
उच्छिष्टभोजी पापेन मुच्यते सर्वथा तदा ॥ ३१८ ॥
४ । ३ । २३ यूयंराजानमितिच दशवारं जपेदृचं ।
वृद्धिश्राद्धे यदा भुंक्ते तदा पापात्प्रमुच्यते ॥ ३१९ ॥
४ । ३ । २३ अराइवेज्जपेन्मंत्रं दशवारं नसंशयः ।

सीमंतेच यदा भुंक्ते मुच्यते किल्बिषात्तदा ॥ ३२० ॥
४ । ३ । २३ यत्मायासिष्टमंत्रंच शतवारं शिवालये ।
अभिशस्ते यदा भुंक्ते कल्मषाद्वै विमुच्यते ॥ ३२१ ॥
४ । ३ । २३ प्रथिष्टयामन्मंत्रं च दशवारं शिवालये ।
सूत्याहनि यदा भुंक्ते तदा पापात्प्रमुच्यते ॥ ३२२ ॥
४ । ३ । २३ ह्येनरोजपेन्मंत्रं पंचाशद्विष्णुमंदिरे ।
यज्ञशाले यदा भुंक्ते तदा पापात्प्रमुच्यते ॥ ३२३ ॥
१ । ४ । ११ मंदिष्टयजपेन्मंत्रं शतवारं जले यदा ।
पुनर्भुवोयदा भुंक्ते तदा पापात्प्रमुच्यते ॥ ३२४ ॥
१ । ४ । ११ आस्मारथंजपेन्मंत्रमयुतंचेन्न कल्मषं ।
भुक्तिकालेंत्यजं स्पृष्ट्वा ज्ञानतोज्ञानतोपिवा ॥ ३२५ ॥
१ । ४ । ११ अददाअर्भामंत्रंच सहस्रं चेन्न कल्मषं ।
शय्याप्रतिग्रही पापान्मुच्यते नात्र संशयः ॥ ३२६ ॥
१ । ४ । ११ इंद्रोअश्रायिमंत्रंच अयुतं वै न दुष्कृतं ।
ज्ञानतोप्यन्यथा दृष्ट्वा भुक्तिकाले रजःस्त्रियः ॥ ३२७ ॥
१ । ४ । १२ त्यंसुमेषंजपेन्मंत्रं दशवारं शिवालये ।
अष्टम्यांवा चतुर्दश्यां दिवा भुंक्ते नपातकम् ॥ ३२८ ॥
१ । ४ । १२ सपर्वतोजपेन्मंत्रं संक्रांतौ दश चेज्जले ।
पर्वद्वये भानुवारे रात्रौ भुंक्ते नकल्मषम् ॥ ३२९ ॥
१ । ४ । १२ सहिद्वरोजपेन्मंत्रं शतं चेद्विष्णुमंदिरे ।
एकादश्यामहोरात्रं भुंक्ते यदि नकल्मषम् ॥ ३३० ॥
१ । ४ । १२ आयंपृणंति मंत्रंच शतवारं नकल्मषं ।
रात्रौ भुंक्ते वत्सरेषु मन्वादिषु युगादिषु ॥ ३३१ ॥
१ । ४ । १२ अभित्वरष्टिंमंत्रं च जपेद्दश नपातकम् ।

रात्रौ भुंक्ते वत्सरेभ्यः परान्नं भुंजते यदि ॥ ३३२ ॥
१ । ४ । १३ परींघृणाजपेन्मंत्रं दशवारं जलेपिवा ।
श्राद्धे भुंक्ते याचितान्नं तदा पापात्प्रमुच्यते ॥ ३३३ ॥
१ । ४ । १३ हृदंनहिजपेन्मंत्रं शतवारं नपातकम् ।
स्तेनभुंक्ते श्राद्धभोक्ता श्राद्धकर्ता गतस्तदा ॥ ३३४ ॥
१ । ४ । १३ जघन्वाँउजपेन्मंत्रं शतवारं यदा तदा ।
याञ्चया श्राद्धकर्तासौ तदा पापात्प्रमुच्यते ॥ ३३५ ॥
१ । ४ । १३ बृहत्स्वश्चंद्रमंत्रंच सहस्रंतु जलाशये ।
अभक्त्या श्राद्धकर्तासौ तदा पापात्प्रमुच्यते ॥ ३३६ ॥
१ । ४ । १३ द्यौश्चिदस्यजपेन्मंत्रं शतवारं प्रशस्तकं ।
अकाले श्राद्धकर्तासौ मुच्यते पातकात्तदा ॥ ३३७ ॥
१ । ४ । १४ यदिन्विन्द्रजपेन्मंत्रं शतवारं नकल्मषं ।
पैतृकं दिनमुद्दिश्य त्वन्यस्मिंश्चेद्दिने कृतम् ॥ ३३८ ॥
१ । ४ । १४ त्वमस्यपारेमंत्रंच जपेन्माघे युतं तदा ।
अब्दश्राद्धे यदा नूनं स्वरूपं कल्मषं नहि ॥ ३३९ ॥
१ । ४ । १४ त्वंभुवःप्रजपेन्मंत्रं दशवारं जले यदा ।
मन्वादयो यदा न्यूनास्तदा पापात्प्रमुच्यते ॥ ३४० ॥
१ । ४ । १४ नयस्यद्यावो मंत्रंच शतवारं तदा जपेत् ।
युगादयोयदा न्यूनाः कुरुतेवै नसंशयः ॥ ३४१ ॥
१ । ४ । १४ आर्चन्नत्रजपेन्मंत्रं शतवारं जले बुधः ।
नित्यश्राद्धं यदान्यूनं कुरुते नात्र संशयः ॥ ३४२ ॥
१ । ४ । १५ न्यूषुवाचं जपेन्मंत्रं शतवारं तुतद्दिने ।
अमाश्राद्धं यदा नास्ति तदा संपूर्णमेवतत् ॥ ३४३ ॥
१ । ४ । १५ दुरोअश्वस्यमंत्रंच शतवारं द्विमासिके ।

महालयं यदा न्यूनं तदा संपूर्णमेवतत् ॥ ३४४ ॥
१।४।१५ शचीवइन्द्रजपेन्मंत्रं दशवारं दिनेदिने ।
बहुद्रव्यंचसिद्धिंच विन्दते ब्रह्मवर्चसम् ॥ ३४५ ॥
१।४।१५ एभिर्द्युभिर्जपेन्मंत्रं शतवारं दिनेदिने ।
अन्वष्टका यदा न्यूना संपूर्णा याति सर्वथा ॥ ३४६ ॥
१।४।१५ समिन्द्ररायामंत्रंतु वर्षेवर्षे जपेच्छतम् ।
आग्रयणंच यदा न्यूनं तदा संपूर्णमेवतत् ॥ ३४७ ॥
५।४।३० मृत्युंजयार्थे गोदानं गृहीत्वा त्र्ययुतं जपेत् ।
व्याहृतीसंपुटं तारं त्र्यक्षं मृत्युं तरिष्यति ॥ ३४८ ॥
१।२।७ देवतार्थंतु गोदानं गृहीत्वानंतदोषकृत् ।
तथापि प्रजपेद्वर्गानतोदेवास्त्रयः शुभम् ॥ ३४९ ॥
व्याहृतीसंपुटं तारं गायत्रीमयुतं जपेत् ।
अनडुहं प्रतिगृह्य मुच्यते कल्मषात्तदा ॥ ३५० ॥
ओष्ठापिधानामंत्रंच जपेद्दश दिनंप्रति ।
एकबुद्धिः सदा तस्य महाविष्णौ प्रवर्तते ॥ ३५१ ॥
८।६।१६ सुपर्णविप्रामंत्रंच दिनंप्रति जपेद्दश ।
वाग्देवी मातृका तस्य जिह्वाग्रे वर्तते सदा ॥ ३५२ ॥
८।३।१६ विश्वतश्चक्षुर्मंत्रंच जपेद्दश दिनंप्रति ।
बहुधा कल्पना बुद्धेरेकस्मिन्नात्मनि स्थिता ॥ ३५३ ॥
ओष्ठमंत्रेण जुहुयाद्विद्याश्रीस्तत्कुले स्थिता ।
त्रिमधुचाष्टसाहस्रं प्रतिवर्षंतु फाल्गुने ॥ ३५४ ॥
२।२।२६ तमुस्तोतारोमंत्रंच दिनंप्रति जपेद्दश ।
मूलाविद्या नसंस्पृष्टा जीवन्मुक्तोनसंशयः ॥ ३५५ ॥
८।६।१६ घर्मासमंतामंत्रंच शतं जप्त्वा यदा तदा ।

यतीच ब्रह्मचारीच मुक्तिकाले नकल्मषम् ॥ ३५६ ॥
८ । ६ । १६ तिस्रोदेष्ट्रायमंत्रंच प्रजपेत्प्रत्यहं शतं ।
तापत्रयं नृणां नास्ति सुखं सर्वत्र सर्वदा ॥ ३५७ ॥
८ । ६ । १६ चतुष्कपर्दामंत्रंच दिनं प्रति जपेच्छतं ।
द्वंद्वातीतः सुखी शांतोनिरसूयोनपेक्षकः ॥ ३५८ ॥
८ । ६ । १६ एकःसुपर्णोमंत्रंच दिनं प्रतिजपेद्दश ।
किंचिन्नास्ति पृथग्बुद्धिः परमात्मनि संस्थिता॥ ३५९ ॥
तंवोदस्मजपेन्मंत्रं त्रिंशद्वारं दिनेदिने ।
रागद्वेषौ तदा नस्तः चित्तशुद्धिर्भवेत्ततः ॥ ३६० ॥
५ । ४ । १ प्रब्रह्मैतुजपेन्मंत्रं शतवारं दिनेदिने ।
विषयेषु जुगुप्साच ब्रह्मज्ञानं भवेत्ततः ॥ ३६१ ॥
१ । ८ । ६ मानस्तोके जपेन्मंत्रं शतवारं शिवालये ।
अग्निकार्यं विना भुंक्ते नपापं ब्रह्मचारिणः ॥ ३६२ ॥
३ । ५ । ९ अग्नेमृळजपेन्मंत्रं शतवारं यदा तदा ।
औपासनं विना भुंक्ते गृहस्थस्य नकल्मषम् ॥ ३६३ ॥
२ । २ । २६ भवामित्रोजपेन्मंत्रं शतवारं दिनेदिने ।
आधिर्नसंस्पृशेत्सत्यं विद्यया सह तिष्ठति ॥ ३६४ ॥
२ । २ । २६ यःपूर्व्यायजपेन्मंत्रं शतवारं दिनेदिने ।
जीवबुद्धिः सदा नास्ति स्वात्मन्येव स्थिता ततः ॥३६५॥
७ । ५ । २५ नानानंवैजपेत्सूक्तं दशवारं दिनेदिने ।
अब्दं मासं दिनं वापि नान्येषां स्वस्य वै लयम्॥ ३६६॥
८ । १ । ७ अहमत्कंजपेन्मंत्रं शतवारं दिनं प्रति ।
त्रिकालज्ञानसिद्धिंच सर्वथा विन्दते द्विजः ॥ ३६७ ॥
८ । १ । ७ अहंदांप्रजपेन्मंत्रं शतवारं दिनेदिने ।

तदा मृत्युभयं नास्ति संस्थितः परमात्मनि ॥ ३६८ ॥
६ । २ । ३५ येत्रिंशतिजपेत्सूक्तं त्रिंशद्वारं यदा ततः ।
वैश्वदेवं विना भुंक्ते तदा पापात्प्रमुच्यते ॥ ३६९ ॥
८ । २ । ६ कथादेवानांमंत्रंच दिनं प्रति शतं जपेत् ।
प्रारब्धसूचितं कर्म प्रणश्यति नसंशयः ॥ ३७० ॥
८ । २ । ६ ऋतूयंतिजपेन्मंत्रं शतवारं दिनेदिने ।
आगामिकंवै प्रारब्धं प्रणश्यति नसंशयः ॥ ३७१ ॥
मूर्खोवा पंडितोवापि नारीवा देवएववा ।
प्रारब्धं वर्तमानंतु भोगादेव प्रणश्यति ॥ ३७२ ॥
७ । ४ । १६ देवान्योनोजपेन्मंत्रं शतवारं दिनेदिने ।
यदृच्छालाभसंतुष्टोपृथिव्यां वर्तते द्विजः ॥ ३७३ ॥
७ । ४ । १६ एवादेवजपेन्मंत्रं शतवारं दिनेदिने ।
देवतानां स्वालयस्य तृष्णानास्ति सदा सुखी ॥ ३७४ ॥
५ । ४ । १७ याःप्रवतोजपेन्मंत्रं शतवारं यदा तदा ।
नदीमुल्लंघ्य यत्स्नानं तस्माद्दोषान्नलिप्यते ॥ ३७५ ॥
२ । २ । २७ युवंहगर्भंमंत्रंच शतवारं जले यदि ।
श्राद्धकर्ता पुनर्भुंक्ते कल्मषान्मुच्यते तदा ॥ ३७६ ॥
४ । २ । २८ हयोनप्रजपेत्सूक्तं सहस्रं चेज्जलेपिवा ।
प्रायश्चित्तं स्वीकरोति तदा पापात्प्रमुच्यते ॥ ३७७ ॥
२ । ६ । १५ प्रघान्वस्यजपेत्सूक्तं त्रिंशतं वैनकल्मषं ।
भूसुरेभ्योभुक्तिकाले पंक्तिभेदं करोतिचेत् ॥ ३७८ ॥
२ । २ । २५ प्रवःपांतंजपेत्सूक्तं सहस्रं विष्णुमंदिरे ।
कृतघ्नान्नं यदा भुंक्ते तदा पापात्प्रमुच्यते ॥ ३७९ ॥
शतवारंतु गायत्रीं व्याहृत्या तारसंपुटं ।

किल्बिषान्नं यदा भुंक्तेदोषोनास्ति तदा जपेत् ॥३८०॥

४।८।१ यज्ञायज्ञाजपेत्सूक्तमेकं धात्र्यां जलेपिवा।
गणान्नंतु यदा भुंक्ते तदा पापात्प्रमुच्यते ॥ ३८१ ॥

४।८।५ स्तुषेजनंजपेद्वर्गं शतं धात्र्यां जलेथवा।
स्वामिद्रोही गृहे भुंक्ते पातकान्मुच्यते तदा ॥ ३८२ ॥

४।८।६ पर्जन्यवातावर्गंच शतवारं जपेद्यदि।
मित्रद्रोहीगृहे भुंक्ते पातकान्मुच्यते तदा ॥ ३८३ ॥

४।८।७ आयुवानस्तुवर्गंच शतवारं जले यदि।
दीर्घरोगिगृहे भुंक्ते तदा पापात्प्रमुच्यते ॥ ३८४ ॥

४।८।८ द्रुवेवोदेवींवर्गंच बदर्यां त्रिशतं जपेत्।
पिशुनस्य गृहे भुंक्ते मुच्यते पातकात्तदा ॥ ३८५ ॥

४।८।९ अभित्यंवीरंवर्गंच शतवारं जलेपिवा।
असूयकगृहे भुंक्ते पापान्मुच्येत सर्वथा ॥ ३८६ ॥

४।८।१० तेनोशायोजपेन्मंत्रं शतवारं शिवालये।
अकार्यादिगृहे भुंक्ते मुच्यते पातकात्तदा ॥ ३८७ ॥

४।८।११ उद्गुत्यंप्रजपेन्मंत्रं शतवारं जले यदा।
अकुलस्य गृहे भुंक्ते तदा पापात्प्रमुच्यते ॥ ३८८ ॥

४।८।१२ मानोह्तकायवर्गंच शतं विष्णवालये जपेत्।
द्वेष्यभक्तं यदा भुंक्ते तदा दोषात्प्रमुच्यते ॥ ३८९ ॥

४।८।१३ तेनइन्द्रो जपेद्वर्गं शतवारं शिवालये।
कुंजरघ्नगृहे भुंक्ते कल्मषान्मुच्यते तदा ॥ ३९० ॥

४।८।१४ नतद्दिवाजपेन्मंत्रं शतवारं जले यदा।
हयघ्नस्य गृहे भुंक्ते तदा मुच्येत कल्मषात् ॥ ३९१ ॥

४। ८। १५ इन्द्रोनेदिष्ठं वर्गंच शतं गोष्ठे जपेद्बुधः ।
गोघ्नस्य चगृहे भुंक्ते मुच्यते पातकात्तदा ॥ ३९२ ॥
४। ८। १६ स्तोत्रमिन्द्रोजपेद्वर्गं शतवारं जलेपिवा ।
कुष्ठ्यन्नमात्रं भुंक्तेतु तदा पापात्प्रमुच्यते ॥ ३९३ ॥
४। ८। २१ एहिवांप्रजपेत्सूक्तं सहस्रं विष्णुमन्दिरे ।
ब्रह्मघ्नस्य गृहे भुंक्ते तदा मुच्येत कल्मषात् ॥ ३९४ ॥
४। ८। २२ यएनंप्रजपेत्सूक्तं सहस्रं विष्णुमन्दिरे ।
पापात्प्रमुच्यते सत्यं भुंक्ते गेहे सुरापिणः ॥ ३९५ ॥
४। ८। २३ इन्द्रानुप्रजपेत्सूक्तं सहस्रं चेज्जले यदा ।
स्वर्णस्तेयगृहे भुंक्ते तदा पापात्प्रमुच्यते ॥ ३९६ ॥
४। ८। २४ शुक्रंतेप्रजपेत्सूक्तं शिवस्थाने सहस्रकं ।
तल्पगस्य गृहे भुंक्ते तदा पापात्प्रमुच्यते ॥ ३९७ ॥
४। ८। २५ प्रनुवोचाजपेत्सूक्तं सहस्रं विष्णुमन्दिरे ।
तत्संयोगिगृहे भुंक्ते तदा मुच्येत कल्मषात् ॥ ३९८ ॥
४। ८। २७ श्नथद्वृत्रंजपेत्सूक्तमेकवारं दिनेदिने ।
उदरं पाणिना मृज्य जीवेद्वा ह्यगदः सुखी ॥ ३९९ ॥
८। १। १० महत्तदुल्बंजपेत्सूक्तं पंचवारं दिनेदिने ।
परान्नकं सदानास्ति नित्यं स्वान्ने स्थिरामतिः ॥४००॥
७। ४। १३ शंनोभवेतिद्वाभ्यांतु भुक्त्वान्नं प्रयतः शुचिः ।
उदरं पाणिना स्पृष्ट्वा ज्योग्जीवेदगदः सुखी ॥ ४०१ ॥
७। ४। १९ महत्तत्प्रजपेत्सूक्तं पंचवारं दिनेदिने ।
औपासनं यदा भुंक्ते नस्पृशेद्विधुरंततः ॥ ४०२ ॥
२। ५। १० अग्नेनयजपेद्वर्गं पंचवारं दिनेदिने ।
विधुरोवा साग्निकस्य यत्फलं तत्फलं लभेत् ॥ ४०३ ॥

७ । ४ । १६ जपेदश्वोनमंत्रंच शतवारं जले यदा ।
अश्वविक्रयिणोगेहे तस्मात्पापात्प्रमुच्यते ॥ ४०४ ॥
७ । ४ । १६ शतंधाराजपेन्मंत्रं शतवारं शिवालये ।
रसविक्रयिणोगेहे भुंक्ते भोक्तुर्न कल्मषम् ॥ ४०५ ॥
७ । ४ । १६ दिवोनसर्गामंत्रंच बदर्यांतु शतं जपेत् ।
उष्ट्रविक्रयिणोगेहे भुंक्ते दोषात्प्रमुच्यते ॥ ४०६ ॥
७ । ४ । १७ प्रतेधाराजपेन्मंत्रं शतवारं यदा तदा ।
अविविक्रयिणोगेहे भुंक्ते भोक्तुर्न किल्बिषं ॥ ४०७ ॥
२ । १ । २६ प्रसुज्येष्ठं जपेद्वर्गमेकवारं दिनेदिने ।
जनप्रियःकीर्तिमांश्च सर्वश्रेष्ठोभुविस्थितः ॥ ४०८ ॥
२ । २ । १ सुषुमप्रजेपेत्सूक्तमेकवारं दिने दिने ।
गोधनं वर्धते सत्यं कुले तस्यतु सर्वदा ॥ ४०९ ॥
त्र्ययुतंचेज्जपेत्सूक्तं षण्मासाल्लभतेश्वरं ।
७ । ५ । ३२ प्रतेसूक्तेन मंत्रेण गणोनत्रिसहस्रकम् ।
ज्येष्ठां कन्यां लभेत्सत्यं लाजैश्चजुहुयान्मधु ॥ ४१० ॥
२ । ८ । ११ कनिक्रदज्जपेन्मंत्रं दशवारं यदा तदा ।
वेदविक्रयिणोगेहे भुंक्ते पापात्प्रमुच्यते ॥ ४११ ॥
वेदाक्षराणियावन्ति विनियुंक्ते र्थकारणात् ।
तावंति भ्रूणहत्पापं लभते नात्र संशयः ॥ ४१२ ॥
अर्थार्थं भोजनार्थं वा योवेदाक्षरमुच्चरेत् ।
चांडालस्तु सविज्ञेयः सर्वकर्मबहिष्कृतः ॥ ४१३ ॥
७ । २ । २० एवानःसोममंत्रंच दिनं प्रति जपेद्दश ।
स्वर्णमुक्तानि मंत्रंच वेदक्रीतं नकल्मषं ॥ ४१४ ॥
७ । ४ । १९ महस्तत्सोममंत्रंच लक्षं चेद्विष्णुमन्दिरे ।

कन्याविक्रयदोषस्तु प्रणश्यति नसंशयः ॥ ४१५ ॥
१ । ४ । ११ इदंनमोजपेन्मंत्रं सहस्रं चेन्न दुष्कृतं ।
ज्ञानातोज्ञानतःस्पृष्टाभुक्तिकाले रजःस्त्रियः ॥ ४१६ ॥
८ । ७ । ११ अहंरुद्रेभिर्मंत्रंच दिनं प्रति जपेद्दश ।
पतिव्रताक्षोभदोषान्मुच्यते सर्वथा तदा ॥ ४१७ ॥
८ । ७ । ११ अहंसोममिति द्वाभ्यां प्रणश्यति नसंशयः ।
ब्रह्मक्षोभप्रजानांच दिनं प्रति जपेद्दश ॥ ४१८ ॥
८ । १ । ७ अहंरंधयं मंत्रंच प्रणश्यति भयं विदुः ।
दिनेदिने चैकवारं जपेत्सायुज्यमेति सः ॥ ४१९ ॥
८ । १ । ८ अहंसयोजपेद्वर्गमेकवारं दिनेदिने ।
अजपायाश्च यत्पुण्यं तत्पुण्यं विन्दते द्विजः ॥ ४२० ॥
१ । ६ । २४ एताउत्याजपेत्सूक्तमेकवारं शिवालये ।
आत्मस्तुत्या यदा दोषआगतश्चेत्तदा नहि ॥ ४२१ ॥
१ । ६ । २८ अग्नीषोमाजपेद्वर्गमेकवारं दिनेदिने ।
परेषां निंदया जातं पातकं नहि सर्वथा ॥ ४२२ ॥
८ । ७ । ११ अहमेवस्वयमिदं प्रत्यहं प्रजपेद्दश ।
तदा क्षोभोविनश्येतशक्तेः पौरुषदानयोः ॥ ४२३ ॥
८ । ७ । ११ मयासःप्रजपेन्मंत्रं शतवारं दिनेदिने ।
ममकारोविनश्येत वर्ष्मपुत्रादिनां तथा ॥ ४२४ ॥
१ । ६ । १९ त्वंसोमप्रजपेत्सूक्तं द्विवारं चेद्दिनेदिने ।
स्वस्तुतेः परनिंदायाजातं पापं प्रणश्यति ॥ ४२५ ॥
८ । ७ । १२ अहमेवजपेन्मंत्रं शतवारं दिनेदिने ।
अहंकारस्ततोनास्ति मायास्पर्शोनसर्वथा ॥ ४२६ ॥
८ । १ । १९ दिनेदिने विरोगी स्याद्वयंसोमजपेद्दश ।

आपोगृहीत्वांजलिना चक्षुक्षी क्षालयेत्तथा ॥ ४२७ ॥
१ । ६ । १५ देवानां भद्रामंत्रंच जपेद्दश दिनेदिने ।
देवैश्च सहसंप्रीतिरायुर्वृद्धिर्लभेद्धनम् ॥ ४२८ ॥
८ । ३ । २० सत्येनोत्तभितामंत्रं जपेद्बिल्वालये दश ।
उत्सवेषु यदा भुंक्ते तदा पापाद्विमुच्यते ॥ ४२९ ॥
४ । ८ । १ यज्ञायज्ञाजपेत्सूक्तमेकं धात्र्यां जलेपिवा ।
गणान्नं चैव योभुंक्ते तदा पापाद्विमुच्यते ॥ ४३० ॥
१ । ६ । ११ मरुतोयस्यसूक्तंतु जपेल्लक्षं शिवालये ।
जगतीप्राणिनां प्राणानभीक्ष्णंलभते गतान् ॥ ४३१ ॥
८ । ८ । १३ अरायिकाणेसूक्तंच पंचवारं दिनेदिने ।
अलक्ष्मीनाशनं सत्यं कुले लक्ष्मी प्रवर्धते ॥ ४३२ ॥
८ । ८ । २१ अक्षीभ्यांते जपेत्सूक्तं विरोगीच सुखी भवेत् ।
व्याधिनाशं प्रकुर्वीत आशिषस्तेनचाक्षतैः ॥ ४३३ ॥
वेदाक्षराणि यावन्ति पठितानि द्विजातिभिः ।
तावन्ति हरिनामानि कीर्तितानि नसंशयः ॥ ॥ ४३४ ॥
८ । ८ । ४२ विष्णुर्योनिमिदं सूक्तं योनिं स्पृष्ट्वा जपेद्व्रती ।
गर्भाधानं ततः कुर्यात्सपुत्रोवै प्रजायते ॥ ४३५ ॥
८ । ७ । २९ अग्नेअच्छा जपेत्सूक्तं दशवारं दिनेदिने ।
परिवेत्तुर्गृहे भुंक्ते मुच्यते कल्मषात्तदा ॥ ४३६ ॥
८ । ७ । १९ अपप्राचोजपेत्सूक्तं शतवारं शिवालये ।
कल्मषं परिवित्तेश्च प्रणश्यति नसंशयः ॥ ४३७ ॥
८ । ७ । २० ईजानमिज्जपेत्सूक्तं शतवारं जले यदि ।
किल्बिषं परिवेत्तुश्च प्रणश्यति नसंशयः ॥ ४३८ ॥
८ । ७ । १५ ममाग्नेप्रजपेत्सूक्तमरण्ये मरणे यदि ।

पुत्रोददाति चेत्तस्य त्र्ययुतं किल्बिषं नहि ॥ ४३९ ॥
८। ७। १७ नासदासीज्जपेत्सूक्तं उदके मरणं यदि।
पुत्रोददाति चेत्तस्य त्र्ययुतं किल्बिषं नहि ॥ ४४० ॥
८। ७। १८ योयज्ञःप्रजपेत्सूक्तमुद्वेगान्मरणं यदि।
पुत्रोददाति चेत्तस्य त्र्ययुतं किल्बिषं नहि ॥ ४४१ ॥
८। ७। २२ उभेयत्प्रजपेत्सूक्तमशक्ते मरणं यदि।
पुत्रोददाति चेत्तस्य त्र्ययुतं किल्बिषं नहि ॥ ४४२ ॥
८। ७। २३ यस्मिन्वृक्षे जपेत्सूक्तं हयाद्दुर्मरणं यदि।
पुत्रोददाति चेत्तस्य त्र्ययुतं किल्बिषं नहि ॥ ४४३ ॥
८। ७। २४ केश्यग्निं प्रजपेत्सूक्तं पाषाणान्मरणं यदि।
पुत्रोददाति चेत्तस्य त्र्ययुतं किल्बिषं नहि ॥ ४४४ ॥
८। ७। २५ उतदेवाजपेत्सूक्तं व्याघ्राद्दुर्मरणं यदि।
पुत्रोददाति चेत्तस्य त्र्ययुतं किल्बिषं नहि ॥ ४४५ ॥
८। ७। २६ तवत्यइन्द्रसूक्तंतु दुर्गे दुर्मरणं यदि।
पुत्रोददाति चेत्तस्य त्र्ययुतं किल्बिषं नहि ॥ ४४६ ॥
८। ७। २७ सूर्यरश्मिर्जपेत्सूक्तं रज्जुदुर्मरणं यदि।
पुत्रोददाति चेत्तस्य त्र्ययुतं किल्बिषं नहि ॥ ४४७ ॥
८। ७। २८ अग्ने तवजपेत्सूक्तं शस्त्राद्दुर्मरणं यदि।
पुत्रोददाति चेत्तस्य त्र्ययुतं किल्बिषं नहि ॥ ४४८ ॥
८। ८। १४ अग्निंहिन्वंतु वैसूक्तं मुष्टिना मरणं यदि।
पुत्रोददाति चेत्तस्य त्र्ययुतं किल्बिषं नहि ॥ ४४९ ॥
८। ८। १५ निधनं भ्रमतामग्नाविमासूक्तं जपेद्यदि।
पुत्रोददाति चेत्तस्य त्र्ययुतं किल्बिषं नहि ॥ ४५० ॥
८। ८। ३५ पतंगं प्रजपेत्सूक्तं मंडूकान्मरणं यदि।

पुत्रोददाति चेत्तस्य ऱ्ययुतं किल्बिषं नहि ॥ ४५१ ॥
८।८।३९ प्रथश्वप्रजपेत्सूक्तं धान्यमध्येमृतं यदि।
पुत्रोददाति चेत्तस्य ऱ्ययुतं किल्बिषं नहि ॥ ४५२ ॥
८।८।४० बृहस्पतिर्जपेत्सूक्त मुद्धरे ऱ्ययुतं जपेत्।
द्विजातीनां दुर्मृतानां पुत्रः कृत्वा समापयेत् ॥ ४५३ ॥
प्रायश्चित्तंतु सामान्यं दुर्मृतानां मलापहं।
नशक्यते पृथक्त्वात्तुजपेत्सूक्तं बृहस्पतिः ॥ ४५४ ॥
गायत्रीं ऱ्ययुतं जप्त्वा सप्तव्याहृतिसंपुटाम्।
दुरितं नहि तत्सर्वं दुर्मृतानां यदस्ति चेत् ॥ ४५५ ॥
७।४।४ इषमूर्जं जपेत्पादं शतवारं दिनेदिने।
मेदिनीवर्धनं धान्यं भुंक्ते पुत्रादिभिः सह ॥ ४५६ ॥
५।१।२६ यूयंपातजपेत्पादं शतवारं दिनेदिने।
सदा सुखं सदाभद्रं मान्यतां विन्दते सदा ॥ ४५७ ॥
८।२।१ प्रतिगृभ्णीतपादंच शतवारं दिनेदिने।
दुर्बुद्धिः सर्वदा नास्ति सुबुद्धिर्वर्धते सदा ॥ ४५८ ॥
८।३।५ वसूनांवाजपेत्पादं शतवारं दिनेदिने।
द्यावापृथिव्योरैश्वर्यं बुध्यायज्ञैश्च विन्दते ॥ ४५९ ॥
८।३।५ अर्वन्तोवाजपेत्पादं शतवारं दिनेदिने
धनवांश्च भुवि स्थित्वा प्रजावांश्च यशोलभेत् ॥ ४६० ॥
८।३।५ वनुंवायेजपेत्पादं शतवारं दिनेदिने।
स्वर्देवास्तेन संतुष्टाबहुश्रेयांसि कुर्वते ॥ ४६१ ॥
८।४।३० तेसोमादोजपेन्मंत्रं शतवारं दिनेदिने।
सुखं स्वर्गमवाप्नोति कल्पपर्यंतसंस्थितः ॥ ४६२ ॥
९।१।३० वृषावोअंशुर्मंत्रंच प्रत्यहं प्रजपेद्दश।

बहुक्षेत्रं बहुद्रव्यं भुनक्तिबहुभिः सदा ॥ ४६३ ॥

६ । २ । ९ ईळिष्वाहिजपेन्मंत्रं त्र्ययुतं विष्णुमंदिरे ।

भगंदरात्प्रमुच्येत जलेवा भूतिदं नृणाम् ॥ ४६४ ॥

६ । २ । ९ दामानं प्रजपेन्मंत्रं त्र्ययुतं बिल्वमूलके ।

अतिसारात्प्रमुच्येत जीवेच्चेत्सद्मसंस्थितः ॥ ४६५ ॥

६ । २ । ९ येषामाबाधमंत्रंच जपेच्चेत्र्ययुतं जले ।

बालग्रहानपीडयंते भूतप्रेतादयस्तथा ॥ ४६६ ॥

६ । २ । ९ उदस्यशोचिर्मंत्रंच जपेच्चेद्विष्णुमंदिरे ।

हृकज्येष्ठाविनश्येत प्रत्यहं फाल्गुने जले ॥ ४६७ ॥

८ । ८ । ३७ उत्तिष्ठप्रजपेन्मंत्रं बदर्यां त्र्ययुतं यदि ।

द्वेष्येरितं नष्टकार्यं सर्वथा नस्पृशेत्तदा ॥ ४६८ ॥

२ । ६ । १० विश्वानिदेवमंत्रंच प्रत्यहं प्रजपेद्दश ।

सर्वारिष्टविनाशंच सर्वाभीष्टप्रदायितत् ॥ ४६९ ॥

३ । ८ । ११ वधेनदस्युं मंत्रंच दिनं प्रति जपेद्दश ।

शत्रुनाशोव्याधिनाशोमृत्युनास्तु भूतिदः ॥ ४७० ॥

८ । ८ । ४८ अघमर्षणसूक्तंवै ऋतंच प्रजपेज्जले ।

महापातकनिर्मुक्तोभूतिदस्तु दिनेदिने ॥ ४७१ ॥

३ । ५ । २० नृष्टुतः प्रजपेन्मंत्रं लक्षं चेद्विष्णुमन्दिरे ।

त्रिंशतं वैष्णवं कृत्वा प्राजापत्यसमं विदुः ॥ ४७२ ॥

३ । २ । ४ शुनंहुवेममंत्रंच लक्षं चेत्प्रजपेज्जले ।

षष्टीनां त्रिंशतं सत्यं तीर्थकृच्छ्रसमं विदुः ॥ ४७३ ॥

२ । ६ । ६ नूनंसातेजपेन्मंत्रं माघमासेतु लक्षकं ।

षष्टीनां त्रिंशतं कृच्छ्रं मंत्रकृच्छ्रसमं विदुः ॥ ४७४ ॥

६ । ५ । २१ विशोविशोजपेन्मंत्रं धात्र्यांच त्रिंशतं जले ।

स्त्रीणां नृणां चपापघ्नं चांद्रायणसमं भवेत्  ॥ ४७५ ॥
७ । ७ । २९ प्रवोच्छारिरिचेमंत्रं बदर्यां लक्षकं जपेत् ।
कृच्छ्रं सांतपनं सत्यं महापातकनाशनं  ॥ ४७६ ॥
१ । ६ । २२ आप्यायस्व जपेन्मंत्रं दशलक्षं शिवालये ।
चंद्रग्रहे यदा भुंक्ते तदा पापात्प्रमुच्यते  ॥ ४७७ ॥
८ । ८ । १६ सूर्यानोदिवजपेन्मंत्रं दशलक्षं जलेपिवा ।
सूर्यग्रहे यदा भुंक्ते तदा पापात्प्रमुच्यते  ॥ ४७८ ॥
एकोद्दिष्टे ब्रह्मचारी जलेवा किल्बिषं नहि ।
१ । ७ । ३७ पादं भुंक्ते लक्षसंख्या प्रजपेद्युभिरक्तुभिः  ॥ ४७९ ॥
१ । ७ । ३७ अरिष्टेभिर्जपेत्पादं षोडशे भोजयेद्यदि ।
पंचायुतं ब्रह्मचारी मुच्यते कल्मषात्ततः  ॥ ४८० ॥
१ । ७ । ३७ तन्नोमित्रोजपेत्पादं वृषोत्सर्गेच भोजने ।
शिवालये ब्रह्मचारी त्र्ययुतं चेन्न दुष्कृतम्  ॥ ४८१ ॥
४ । १ । २ अग्नओजिष्ठं पादंच त्र्यूने भुंक्ते जपेद्यदि ।
अयुतं चेद्ब्रह्मचारी तदा पापात्प्रमुच्यते  ॥ ४८२ ॥
१ । ७ । ३७ अदितिःप्रजपेत्पादं सपिंड्यां भोजयेद्यदि ।
अयुतं चेद्ब्रह्मचारी नरकान्मुच्यते तदा  ॥ ४८३ ॥
( प्रख्यापयनं चाध्यनं प्रश्नपूर्वपरिग्रहः ।
याजनाध्यापनं वादः षड्विधोवेदविक्रयः  ॥ १ ॥
यद्वेदविक्रयद्रव्यं यच्च क्लीबादुपार्जितं ।
अदेयं पितृदेवेभ्यः स्त्रिया यच्चार्जितं धनं )  ॥ २ ॥

॥ इति शौनकोक्तं ऋग्विधानं संपूर्णम् ॥

श्रीगणेशायनमः

# ॥ अथ परिशिष्टानि ॥

द्वितीयाष्टकस्य पंचमाध्याये पंचदशवर्गानन्तरं ऋगष्टकं परिशिष्टं

माबिभेर्नमरिष्यसिपरित्वापामिसर्वतः । घनेनहन्मिवृश्चिकमहिं
दण्डेनागतं १ आदित्यरथवेगेनविष्णुबाहुबलेनच । गरुडपक्षनिपाते
नभूमिंगच्छमहायशाः २ गरुडस्यजातमात्रेणत्रयोलोकाःप्रकंपिताः।
प्रकंपितामहीसर्वासशैलवनकानना ३ गगनंनष्टचन्द्रार्कज्योतिषंनप्र
काशते । देवताभयभीताश्चमारुतोनप्लवायतिमारुतोनप्लवायत्योनमः
४ भोसर्पभद्रभद्रंतेदूरंगच्छमहायशाः। जनमेजयस्ययज्ञान्तेआस्ती
कवचनंस्मर ५ आस्तीकवचनंश्रुत्वायःसर्पोननिवर्तते । शतधाभिद्यं
तेमूर्ध्निशिंशवृक्षफलंयथा ६ नर्मदायैनमःप्रातर्नर्मदायैनमोनिशि ।
नमोस्तुनर्मदेतुभ्यंत्राहिमांविषसर्पतः ७ योजरत्कारुणाजातोजरत्क
न्यांमहायशाः । तस्यसर्पापिभद्रंतेदूरंगच्छमहायशाः ८ ॥

द्वितीयाष्टकस्य अष्टमाध्याये द्वादशवर्गानन्तरं ऋक्पंचकं परिशिष्टं

भद्रंवददक्षिणतोभद्रमुत्तरतोवद । भद्रंपुरस्तान्नोवदभद्रंपश्चा
त्कपिंजल १ भद्रंवदपुत्रैर्भद्रंवदगृहेषुच । भद्रमस्माकंनोवदभद्रंनो
अभयंवद २ भद्रमधस्तान्नोवदभद्रमुपरिष्टान्नोवद । भद्रंभद्रंनआव
दभद्रंनःसर्वतोवद ३ असपत्नःपुरस्तान्नःशिवंदक्षिणतस्कृधि। अभ
यंसततंपश्चाद्भद्रमुत्तरतोगृहे ४ यौवनानिमहयसिजिग्युषामिवदुन्दु
भिः । शकुन्तकप्रदक्षिणंशतपत्राभिनोवद ५ ॥

चतुर्थाष्टकस्य द्वितीयाध्याये पंचविंशतिवर्गानन्तरं एकर्चं परिशिष्टं

जागर्षि त्वं भुवने जातवेदो जागर्षि यत्र यजते हविष्मान्। इदं हविः श्रद्दधानो जुहोमि तेन पासि गुह्यं नाम गोनाम् १ ॥

चतुर्थाष्टकस्य तृतीयाध्याये तृतीयवर्गान्ते एकर्चं परिशिष्टं

सूक्तान्ते तृणान्यग्नावरण्ये वोदके पिवा । यत्स्तृणैरध्ययनं तदधीतं स्तृणानि भवते भव । वापीकूपतडागानां समुद्रं गच्छ स्वाहा १ ॥

चतुर्थाष्टकस्य तृतीयाध्याये सप्तमवर्गानन्तरं ऋग्द्वयं परिशिष्टं

स्वस्त्ययनं तार्क्ष्यमरिष्टनेमिं महद्भूतं वायसं देवतानां असुरघ्नमिन्द्रसखं समत्सु बृहद्यशो नावमिवारुहेम १ अंहोमुचमाङ्गिरसं गयं च स्वस्त्यात्रेयं मनसा च तार्क्ष्यं । प्रयतपाणिः शरणं प्रपद्ये स्वस्ति संबाधेष्वभयं नो अस्तु २ ॥

चतुर्थाष्टकस्य चतुर्थाध्याये एकोनत्रिंशतिवर्गानन्तरं एकर्चं परिशिष्टं

वर्षं तु ते विभावरि दिवो अभ्रस्य विद्युतः । रोहन्तु सर्वबीजान्यव ब्रह्मद्विषो जहि १ ॥

चतुर्थाष्टकस्य चतुर्थाध्याये चतुस्त्रिंशद्वर्गानन्तरं इदं सप्तविंशतिऋगात्मकं परिशिष्टं

हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजां । चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह १ तां म आवह जातवेदो लक्ष्मीमनपगामिनीं । यस्यां हिरण्यं विन्देयं गामश्वं पुरुषानहं २ अश्वपूर्वां रथमध्यां हस्तिनादप्रबोधिनीं । श्रियं देवीमुपह्वये श्रीर्मा देवी जुषतां ३ कांसोस्मितां हिरण्यप्राकारामार्द्रां ज्वलन्तीं तृप्तां तर्पयन्तीं । पद्मेस्थितां पद्मवर्णां तामिहोपह्वये श्रियं ४ चन्द्रां प्रभासां यशसा ज्वलन्तीं श्रियं लोके देवजुष्टामुदारां । तां पद्मिनीमीं शरणं प्रपद्ये अलक्ष्मीर्मे नश्यतां त्वां वृणे ५ ॥ १ ॥ आदित्यवर्णे तपसोधि जातो वनस्पतिस्तव वृक्षोथ बिल्वः । तस्य फलानि तपसा नुदन्तु मायान्तरा याश्च बाह्या अलक्ष्मीः ६ उपैतु मां देवसखः की

तिंश्च॒मणिनासह । प्रा॒दुर्भूतोस्मुराष्ट्रेस्मिन्कीर्तिमृद्धिंददातुमे ७ क्षुत्पि
पा॒सामंलाज्येष्ठामलक्ष्मींनाशयाम्यहं । अभूतिमसंमृद्धिंचसर्वा॒निर्णुद
मेगृहात् ८ गंधद्वा॒रांदु॒राधर्षांनि॒त्यपुष्टांकरी॒षिणीं । ई॒श्वरीं॒सर्वभूताना॒ं
तामि॒होपह्वये॒श्रियं ९ मनसः॒काम॒माकूतंवा॒चः॒स॒त्यमशीमहि । प॒शू
नांरूपंमन्नस्यम॒यिश्रीःश्रयतांयशः १०॥२॥कर्दमे॒नप्रजाभूताम॒यिसंभव
कर्दम । श्रियंवा॒सयमेकु॒लेमा॒तरंपद्म॒मालिनीं ११ आप॒ःसृजन्तुस्नि
ग्धानि॒चिक्लीतवसमेगृहे । निचदेवींमा॒तरं॒श्रियंवा॒सयमेकुले १२ आ॒
र्द्रांपु॒ष्करिणींपु॒ष्टिंपिंगलांपद्ममालिनीं । चन्द्रांहि॒रण्मयींलक्ष्मीं॒जातवे
दोम॒आवह १३ आ॒र्द्रांय॒ःकरिणीय॒ष्टिंसुवर्णांहेम॒मालिनीं । सूर्यांहि॒
रण्मयींलक्ष्मीं॒जातवेदोम॒आवह १४ तांम॒आवहजातवेदो॒लक्ष्मीमन
पगा॒मिनीं । यस्यांहिरण्यंप्रभूतंगावोदा॒स्योश्वान्वि॒न्देयंपु॒रुषान॒हं
१५॥३॥यः॒शु॒चि॒ःप्रयतोभूत्वाजु॒हुयादाज्य॒मन्वहं। सूक्तंपंचदशर्चंचश्री॒
कामः॒सत॒तंजपेत् १६ पद्मा॒न॒नेपद्म॒निपद्मप॒त्रेपद्मप्रिये॒पद्म॒दलाय
ता॒क्षि । वि॒श्वप्रि॒येविश्वमनोनुकूलेत्वत्पादप॒द्मंम॒यिसंन्निधत्स्व १७
प॒द्मा॒न॒नेपद्मऊ॒रूप॒द्माक्षीपद्म॒संभवे । तन्मेभ॒जसिपद्मा॒क्षियेनसौख्यंल
भा॒म्यहं १८ अ॒श्वदा॒यींगोदा॒यीध॒नदायिम॒हाधने । धनंमे॒जुषतां
दे॒विस॒र्वान्कामांश्चदेहिमे १९ पु॒त्रपौ॒त्रधनंधा॒न्यंह॒स्त्यश्वादिग॒वे
रथं । प्र॒जा॒नां॒भवसीमा॒ताआ॒युष्मंतंक॒रोतुमे २० धनंम॒ग्निर्धनं
वा॒युर्धनं॒सूर्योधनंवसुः । धन॒मिन्द्रोबृ॒ह॒स्पतिर्वरु॒णंधनंमस्तुमे २१
वैनतेय॒सोमंपिब॒सोमंपिबतुवृत्र॒हा । सोमंधनस्यसो॒मिनो॒मह्यंददातुसो॒
मिनः २२ नक्रोधोनचमात्सर्यनलोभोनाशुभामतिः । भवन्ति॒
कृतपुण्या॒नांभ॒क्तानांश्रीसूक्तंजपेत् २३ सर॒सिज॒निल॒येसरो
जहस्तेधवलतरांशुकगंधमाल्यशुभे । भ॒गवति॒ह॒रिवल्ल॒भेमनो॒ज्ञेत्रिभु

वनभूतिकरीप्रसीदमह्यं २४ विष्णुपत्नींक्षमांदेवींमाधवींमाधव प्रियां । लक्ष्मीप्रियसखीदेवींनमाम्यच्युतवल्लभां २५ महादेव्यै चविद्महेविष्णुपत्न्यैचधीमहि । तन्नोलक्ष्मीःप्रचोदयात् ॥ २६ ॥ श्रीवर्चस्वमायुष्यमारोग्यमाविधाच्छोभमानंमहीयते । धनंधान्यंपशुं बहुपुत्रलाभंशतसंवत्सरंदीर्घमायुः २७ ॥ इतिश्रीसूक्तं ॥

चतुर्थाष्टकस्य सप्तमाध्याये विंशतिवर्गानन्तरं इदं ऋकूत्रयं परिशिष्टं

चक्षुश्चश्रोत्रंचमनश्चवाक्चप्राणापानौदेहइदंशरीरं । द्वौप्रत्यंचा वनुलोमौविसर्गावेतंतंमन्येदशयंत्रमुत्सं १ उरश्चपृष्ठिश्चकरौचबा हूजंघेचोरूउदरंशिरश्च । रोमाणिमांसंरुधिरंस्थिमज्जमेतच्छरीरंजल बुद्बुदोपमं २ भ्रुवौललाटेचतथाचकर्णौहनूकपोलौछुबुकंस्त थाच । ओष्ठौचदन्ताश्चतथैवजिह्वामेतच्छरीरंमुखरंतकोशं ३ ॥

पंचमाष्टकस्य तृतीयाध्याये त्रिंशद्वर्गान्ते इदं ऋकूषट्कंपठ्यते

शंवतीःपारयन्त्येतेतंपृच्छन्तिवचोयुजां । अभ्यारंतंयमाकेतुंय एवेदमितिब्रवन् १ भासाकेतुंपरिस्रुतंभारतीर्ब्रह्मवर्धनीः । सं जानानामहीमातायएवेदमितिब्रवत् २ इन्द्रस्तांकिंविभुंप्रभुं भानुनेयंसरस्वतीं । येनसूर्यमरोचयद्येनेमेरोदसीउभे ३ जुषस्वां ग्नेअंगिरःकाण्वंमेध्यातिथिं । मात्वासोमस्यबर्हहत्सुतस्यमधुमत्तमः ॥ ४ ॥ त्वमग्नेअंगिरःशोचस्वदेववीतमः । आशंतमशंतमाभिरभि ष्टिभिःशांतिःस्वस्तिमकुर्वत ५ शंनःकनिक्रदद्देवःपर्जन्योअभि वर्षतु । शंनोद्यावापृथिवीशंप्रजाभ्यःशंनएधिद्विपदेशंचतुष्पदे ६ ॥

पंचमाष्टकस्य चतुर्थाध्याये द्वाविंशतिवर्गानन्तरं इदं ऋङ्नवकंपठ्यते

स्वप्नःस्वप्नाधिकरणेसर्वंनिष्वापयाजनं । आसूर्यमन्यान्त्स्वापयद्व्यू १ष्टं जाग्रियादहं १ अजगरोनामसर्पःसर्पिरविषोमहान् । तस्मि

न्हिसर्पःक्षुधितस्तेनंत्वास्वापयामसि २ सर्पःसर्पोअजगरःसर्पिरंविषो-
महान् । तस्यसर्पास्तिंसिधवस्तस्यंगाधमंशीमहि ३ कालिकोनाम-
सर्पोनवनागसहस्रंबळः । यमुनह्रदेहंसोजातो ३ योनारायणवाह-
नः ४ यदिकालिकंदूतस्ययदिकाःकालिकाद्भयात् । जन्मभूमि-
मंतिक्रान्तोनिर्विषोयातिकालिकः ५ आयाहीन्द्रपथिभिरीळिते-
भिर्यज्ञमिमंनोभागधेयंजुषस्व । तृप्तांजहुर्मातुळस्येवयोषाभागस्ते-
पैतृष्वसेयींवपामिव ६ यशस्करं बलवन्तंप्रभुत्वंतमेवराजाधिपति-
र्बभूव । संकीर्णनागाश्वपतिर्नराणांसुमंगल्यंसततंदीर्घमायुः ७
कर्कोटकोनामसर्पोयोदृष्टीविषउच्यते । तस्यसर्पस्यसर्पत्वंतस्मैस-
र्पनमोस्तुते ८ नमोअस्तुसर्पेभ्योयेकेचपृथिवीमनु । येअन्तरिक्षे-
येदिवितेभ्यःसर्पेभ्योनमः ९ ॥

पंचमाष्टकस्य सप्तमाध्याये चतुर्थवर्गान्तेइयमेकाऋक्पठ्यते

उपप्लवदमंडूकिवर्षमावदतादुरि । मध्येह्रदस्यप्लवस्यनिगृह्यचतुरः
पुरः १

षष्ठाष्टकस्यचतुर्थाध्याये त्रयोदशवर्गानन्तरं अशीतिऋगात्मकंवालखिल्यसंज्ञकंपरिशिष्टं

## ॥ अथ वालखिल्यम् ॥

अभिप्रदशप्रस्कण्वइन्द्रः प्रागाथं

अभिप्रवःसुराधसमिन्द्रमर्चयथाविदे ।
योजरितृभ्योमघवापुरूवसुःसहस्रेणेवशिक्षति ॥ १ ॥

अभि । प्र । वः । सुऽराधसम् । इन्द्रम् । अर्च । यथा । विदे ।
यः । जरितृऽभ्यः । मघऽवा । पुरुऽवसुः । सहस्रेणऽइव ।
शिक्षति ॥ १ ॥

शतानींकेवप्रजिगातिधृष्णुयाहंतिवृत्राणिदाशुषे ।
गिरेरिवप्ररसांअस्यपिन्विरेदत्रांणिपुरुभोजंसः ॥ २ ॥

शतानींकाऽइव । प्र । जिगाति । धृष्णुऽया । हन्ति । वृत्राणि । दाशुषे ॥
गिरेःऽइंव । प्र । रसाः । अस्य । पिन्विरे । दत्रांणि । पुरुऽभोजंसः ॥२॥

आत्वांसुतासइन्दंवोमदायइन्द्रगिर्वणः ।
आपोनवंज्रिन्नन्वोक्यंऽसरंःपृणन्तिशूरराधंसे ॥ ३ ॥

आ । त्वा । सुतासंः । इन्दंवः । मदाः । ये । इन्द्र । गिर्वणः ॥
आपंः । न । वज्रिन् । अनुं । ओक्यम् । सरंः । पृणन्तिं । शूर ।
राधंसे ॥ ३ ॥

अनेहसंप्रतरंणंविवक्षंणंमध्वःस्वादिष्ठमींपिब ।
आयथांमन्दसानःकिरासिनःप्रक्षुद्रेवत्मनांधृषत् ॥ ४ ॥

अनेहसंम् । प्रऽतरंणम् । विवक्षंणम् । मध्वंः । स्वादिष्ठम् । ईम् । पिब ।
आ । यथां । मन्दसानः । किरासिं । नः । प्र । क्षुद्राऽइंव । त्मनां ।
धृषत् ॥ ४ ॥

आनःस्तोममुपंद्रवद्धियानोअश्वोनसोतृंभिः ।
यंतेस्वधावन्त्स्वदयन्तिधेनवइन्द्रकण्वेषुरातयंः ॥ ५ ॥ १ ॥

आ । नः । स्तोमंम् । उपं । द्रवत् । हियानः । अश्वंः । न । सोतृंऽभिः ।
यम् । ते । स्वधाऽवन् । स्वदयंन्ति । धेनवंः । इन्द्र । कण्वेषु ।
रातयंः ॥ ५ ॥ १ ॥

उग्रंनवीरंनमसोपंसेदिमविभूतिमक्षितावसुम् ।
उद्रीवंवज्रिन्नवतोनसिंञ्चतेक्षरंन्तीन्द्रधीतयंः ॥ ६ ॥

उग्रम् । न । वीरम् । नमंसा । उपं । सेदिम । विऽभूंतिम् । अक्षिंतऽवसुम् ।
उद्रीऽइंव । वज्रिन् । अवतः । न । सिञ्चते । क्षरंन्ति ।
इन्द्र । धीतयंः ॥ ६ ॥

यद्धनूनंयद्वायज्ञेयद्वापृथिव्यामधि।
अतोनोयज्ञमाशुभिर्महेमतउग्रउग्रेभिरागहि ॥ ७॥

यत्। ह। नूनम्। यत्। वा। यज्ञे। यत्। वा। पृथिव्याम्। अधि।
अतः। नः। यज्ञम्। आशुऽभिः। महेऽमते। उग्रः। उग्रेभिः।
आ। गहि ॥ ७॥

अजिरासोहरयोयेतआशवोवाताइवप्रसक्षिणः।
येभिरपत्यमनुषःपरीयसेयेभिर्विश्वंस्वर्दृशे ॥ ८॥

अजिरासः। हरयः। ये। ते। आशवः। वाताःऽइव। प्रऽसक्षिणः।
येभिः। अपत्यम्। मनुषः। परिऽईयसे। येभिः। विश्वम्। स्वः।
दृशे ॥ ८॥

एतावतस्तईमहइन्द्रसुम्नस्यगोमतः।
यथाप्रावोमघवन्मेध्यातिथिंयथानीपातिथिंधने ॥ ९॥

एतावतः। ते। ईमहे। इन्द्र। सुम्नस्य। गोऽमतः।
यथा। प्र। आवः। मघऽवन्। मेध्यऽअतिथिम्। यथा।
नीपऽअतिथिम्। धने ॥ ९॥

यथाकण्वेमघवन्त्रसदस्यवियथापक्थेदशव्रजे।
यथागोशर्येअसनोर्ऋजिश्वनीन्द्रगोमद्धिरण्यवत् ॥ १०॥ २॥

यथा। कण्वे। मघऽवन्। त्रसदस्यवि। यथा। पक्थे। दशऽव्रजे।
यथा। गोऽशर्ये। असनोः। ऋजिश्वनि। इन्द्र। गोऽमत्।
हिरण्यऽवत् ॥ १०॥ २॥

प्रसुश्रुतं दश पुष्टिगुरिन्द्रः प्रागाथं

प्रसुश्रुतंसुराधसमर्चाशक्रमभिष्टये।
यःसुन्वतेस्तुवतेकाम्यंवसुसहस्रेणेवमंहते ॥ १॥

प्र । सु । श्रुतम् । सुऽराधसम् । अर्च । शक्रम् । अभिष्टये ।
यः । सुन्वते । स्तुवते । काम्यम् । वसु । सहस्रेणऽइव । मंहते ॥ १ ॥

शतानीकाहेतयोअस्यदुष्टराइन्द्रस्यसमिषोमहीः ।
गिरिर्नभुज्मामघवत्सुपिन्वतेयदींसुताअमन्दिषुः ॥ २ ॥

शतऽअनीकाः । हेतयः । अस्य । दुस्तराः । इन्द्रस्य । सम्ऽइषः ।
महीः । गिरिः । न । भुज्मा । मघवत्ऽसु । पिन्वते । यत् । ईम् ।
सुताः । अमन्दिषुः ॥ २ ॥

यदींसुतासइन्दवोभिप्रियममन्दिषुः ।
आपोनधायिसवनंमआवसोदुघाइवोपदाशुषे ॥ ३ ॥

यत् । ईम् । सुतासः । इन्दवः । अभि । प्रियम् । अमन्दिषुः ।
आपः । न । धायि । सवनम् । मे । आ । वसो इति ।
दुघाःऽइव । उप । दाशुषे ॥ ३ ॥

अनेहसंवोहवमानमूतयेमध्वःक्षरन्तिधीतयः ।
आत्वावसोहवमानासइन्दवउपस्तोत्रेषुदधिरे ॥ ४ ॥

अनेहसम् । वः । हवमानम् । ऊतये । मध्वः । क्षरन्ति । धीतयः ।
आ । त्वा । वसो इति । हवमानासः । इन्दवः । उप । स्तोत्रेषु ।
दधिरे ॥ ४ ॥

आनःसोमेस्वध्वरइयानोअत्योनतोशते ।
यंतेस्वदावन्त्स्वदन्तिगूर्तयःपौरेछन्दयसेहवम् ॥५॥३॥

आ । नः । सोमे । सुऽअध्वरे । इयानः । अत्यः । न । तोशते ।
यम् । ते । स्वदाऽवन् । स्वदन्ति । गूर्तयः । पौरे । छन्दयसे ।
हवम् ॥ ५ ॥ ३ ॥

प्रवीरमुग्रंविविचिंधनस्पृतंविभूतिंराधसोमहः ।
उद्रीवंवज्रिन्नवतोवसुत्वनासदापीपेथदाशुषे ॥ ६ ॥

प्र । वीरम् । उग्रम् । विविंचिम् । धनऽस्पृतम् । विऽभूतिम् ।
राधंसः । महः । उद्रीऽइंव । वज्रिन् । अवतः ।
वसुऽत्वना । सदा । पीपेथ । दाशुषे ॥ ६ ॥

यद्धनूनंपंरावतियद्वापृथिव्यांदिवि ।
युजानइन्द्रहरिंभिर्महेमतऋष्वऋष्वेभिरागंहि ॥ ७ ॥

यत् । ह । नूनम् । पराऽवति । यत् । वा । पृथिव्याम् । दिवि ।
युजानः । इन्द्र । हरिंऽभिः । महेऽमते । ऋष्वः । ऋष्वेभिः ।
आ । गहि ॥ ७ ॥

रथिरासोहरयोयेतेअस्रिधओजोवातस्यपिप्रति ।
येभिर्निदस्युंमनुंषोनिघोषयोयेभिःस्वःपरीयसे ॥ ८ ॥

रथिरासः । हरयः । ये । ते । अस्रिधः । ओजः । वातस्य ।
पिप्रति । येभिः । नि । दस्युंम् । मनुंषः । निऽघोषयः । येभिः ।
स्व१रिति स्वः । परिऽईयसे ॥ ८ ॥

एतावंतस्तेवसोविद्यामंशूरनव्यंसः ।
यथाप्रावएतंशंकृत्व्येधनेयथावशंदशंव्रजे ॥ ९ ॥

एतावंतः । ते । वसो इति । विद्याम । शूर । नव्यंसः ।
यथा । प्र । आवः । एतशम् । कृत्व्ये । धने । यथा । वशम् ।
दशंऽव्रजे ॥ ९ ॥

यथाकण्वेमघवन्मेधेअध्वरेदीर्घनीथेदमूनसि ।
यथागोशर्येअसिषासोअद्रिवोमयिगोत्रंहरिश्रियम् ॥ १० ॥ ४॥

यथा । कण्वे । मघऽवन् । मेधे । अध्वरे । दीर्घऽनीथे ।
दमूनसि । यथा । गोऽशर्ये । असिसासः । अद्रिऽवः ।
मयि । गोत्रम् । हरिऽश्रियम् ॥ १० ॥ ४ ॥

यथामनौदश श्रुष्टिगुरिन्द्रः मागार्थं

यथामनौसांवरणौसोममिन्द्रापिबःसुतम् ।
नीपातिथौमघवन्मेध्यातिथौपुष्टिगौश्रुष्टिगौसचा ॥ १ ॥

यथा । मनौ । साम्ऽवरणौ । सोमम् । इन्द्र । अपिबः ।
सुतम् । नीपऽअतिथौ । मघऽवन् । मेध्यऽअतिथौ ।
पुष्टिऽगौ । श्रुष्टिऽगौ । सचा ॥ १ ॥

पार्षद्वाणःप्रस्कण्वंसमसादयच्छयानंजिव्रिमुद्धितम् ।
सहस्राण्यसिषासद्गवामृषिस्त्वोतोदस्यवेवृकः ॥ २ ॥

पार्षद्वाणः । प्रस्कण्वम् । सम् । असादयत् । शयानम् ।
जिव्रिम् । उद्धितम् । सहस्राणि । असिसासत् । गवाम् । ऋषिः ।
त्वाऽऊतः । दस्यवे । वृकः ॥ २ ॥

यउक्थेभिर्नविन्धतेचिकिद्यऋषिचोदनः ।
इन्द्रंतमच्छावदनव्यस्यामत्यरिष्यन्तंनभोजसे ॥ ३ ॥

यः । उक्थेभिः । न । विन्धते । चिकित् । यः । ऋषिऽचोदनः ।
इन्द्रम् । तम् । अच्छ । वद । नव्यस्या । मती । अरिष्यन्तम् ।
न । भोजसे ॥ ३ ॥

यस्माअर्कंसप्तशीर्षाणमानृचुस्त्रिधातुमुत्तमेपदे ।
सत्विंमाविश्वाभुवनानिचिक्रददादिज्जनिष्टपौंस्यम् ॥ ४ ॥

यस्मै । अर्कम् । सप्तऽशीर्षाणम् । आनृचुः । त्रिऽधातुम् ।
उत्ऽतमे । पदे । सः । तु । इमा । विश्वा । भुवनानि ।
चिक्रदत् । आत् । इत् । जनिष्ट । पौंस्यम् ॥ ४ ॥

योनोदातावसूनामिन्द्रंतंहूमहेवयम् ।
विद्मास्यसुमतिंनवीयसींगमेमगोमतिव्रजे ॥ ५ ॥ ५ ॥

यः । नः । दाता । वसूनाम् । इन्द्रम् । तम् । हूमहे । वयम् ।
विद्म । हि । अस्य । सुऽमतिम् । नवीयसीम् । गमेम ।
गोऽमति । व्रजे ॥ ५ ॥ ५ ॥

यस्मैत्वंवसोदानायशिक्षसिसरायस्पोषमश्नुते ।
तंत्वावयंमघवन्निन्द्रगिर्वणःसुतावंतोहवामहे ॥ ६ ॥

यस्मै । त्वम् । वसो इति । दानाय । शिक्षसि । सः । रायः ।
पोषम् । अश्नुते । तम् । त्वा । वयम् । मघऽवन् । इन्द्र ।
गिर्वणः । सुतऽवन्तः । हवामहे ॥ ६ ॥

कदाचनस्तरीरसिनेन्द्रसश्चसिदाशुषे ।
उपोपेन्नुमघवन्भूयइन्नुतेदानंदेवस्यपृच्यते ॥ ७ ॥

कदा । चन । स्तरीः । असि । न । इन्द्र । सश्चसि ।
दाशुषे । उपऽउप । इत् । नु । मघऽवन् । भूयः । इत् ।
नु । ते । दानम् । देवस्य । पृच्यते ॥ ७ ॥

प्रयोननक्षेअभ्योजसाक्रिविंवधैःशुष्णंनिघोषयन् ।
यदेदस्तंभीत्प्रथयन्नमून्दिवमादिज्जनिष्टपार्थिवः ॥ ८ ॥

प्र । यः । ननक्षे । अभि । ओजसा । क्रिविम् । वधैः ।
शुष्णम् । निऽघोषयन् । यदा । इत् । अस्तम्भीत् । प्रथयन् ।
अमूम् । दिवम् । आत् । इत् । जनिष्ट । पार्थिवः ॥ ८ ॥

यस्यायंविश्वआर्योदासःशेवधिपाअरिः ।
तिरश्चिदर्येरुशमेपवीरवितुभ्येत्सोअज्यतेरयिः॥ ९ ॥

यस्य । अयम् । विश्वः । आर्यः । दासः । शेवधिऽपाः ।
अरिः । तिरः । चित् । अर्ये । रुशमे । पवीरवि ।
तुभ्य । इत् । सः । अज्यते । रयिः ॥ ९ ॥

तुरण्यवोमधुमन्तंघृतश्चुतंविप्रासोअर्कमानृचुः।
अस्मेरयिःपप्रथेवृष्ण्यंशवोस्मेसुवानासइन्दवः ॥ १० ॥ ६॥

तुरण्यवः । मधुऽमन्तम् । घृतऽश्चुतम् । विप्रासः । अर्कम् । आनृचुः । अस्मे इति । रयिः । पप्रथे । वृष्ण्यम् । शवः । अस्मे इति । सुवानासः । इन्दवः ॥ १० ॥ ६ ॥

यथामनौ दशायुरिन्द्रः मागाथं

यथामनौविवस्वतिसोमंशक्रापिबःसुतम् ।
यथात्रितेछन्दइन्द्रजुजोषस्यायौमादयसेसचा ॥ १ ॥

यथा । मनौ । विवस्वति । सोमम् । शक्र । अपिबः । सुतम् । यथा । त्रिते । छन्दः । इन्द्र । जुजोषसि । आयौ । मादयसे । सचा ॥ १ ॥

पृषध्रेमेध्येमातरिश्वनीन्द्रसुवानेअमन्दथाः ।
यथासोमंदशशिप्रेदशोण्येस्यूमरश्मावृजूनसि ॥ २ ॥

पृषध्रे । मेध्ये । मातरिश्वनि । इन्द्र । सुवाने । अमन्दथाः । यथा । सोमम् । दशऽशिप्रे । दशऽओण्ये । स्यूमऽरश्मौ । ऋजूनसि ॥ २ ॥

यउक्थाकेवलादधेयःसोमंधृषितापिबत् ।
यस्मैविष्णुस्त्रीणिपदाविचक्रमउपमित्रस्यधर्मभिः ॥ ३ ॥

यः । उक्था । केवला । दधे । यः । सोमम् । धृषिता । अपिबत् । यस्मै । विष्णुः । त्रीणि । पदा । विऽचक्रमे । उप । मित्रस्य । धर्मऽभिः ॥ ३ ॥

यस्यत्वमिन्द्रस्तोमेषुचाकनोवाजेवाजिञ्छतक्रतो ।
तंत्वावयंसुदुघामिवगोदुहोजुहूमसिश्रवस्यवः ॥ ४ ॥

यस्य । त्वम् । इन्द्र । स्तोमेषु । चाकनः । वाजे । वाजिन् । शतक्रतो इति शतऽक्रतो । तम् । त्वा । वयम् । सुदुघाम्ऽइव । गोऽदुहः । जुहूमसि । श्रवस्यवः ॥ ४ ॥

योनोदातासनःपितामहाँउग्रईशानकृत् ।
अयामन्नुग्रोमघवापुरूवसुर्गोरश्वस्यप्रदातुनः ॥ ५ ॥ ७ ॥

यः । नः । दाता । सः । नः । पिता । महान् । उग्रः । ईशानऽकृत् । अयामन् । उग्रः । मघऽवा । पुरुऽवसुः । गोः । अश्वस्य । प्र । दातु । नः ॥ ५ ॥ ७ ॥

यस्मैत्वंवसोदानायमंहसेसरायस्पोषमिन्वति ।
वसूयवोवसुपतिंशतक्रतुंस्तोमैरिन्द्रँहवामहे ॥ ६ ॥

यस्मै । त्वम् । वसो इति । दानाय । मंहसे । सः । रायः । पोषम् । इन्वति । वसुऽयवः । वसुऽपतिम् । शतऽक्रतुम् । स्तोमैः । इन्द्रम् । हवामहे ॥ ६ ॥

कदाचनप्रयुच्छस्युभेनिपासिजन्मनी ।
तुरीयादित्यहवनंतइन्द्रियमातस्थावमृतंदिवि ॥ ७ ॥

कदा । चन । प्र । युच्छसि । उभे इति । नि । पासि । जन्मनी इति । तुरीय । आदित्य । हवनम् । ते । इन्द्रियम् । आ । तस्थौ । अमृतम् । दिवि ॥ ७ ॥

यस्मैत्वंमघवन्निन्द्रगिर्वणःशिक्षोशिक्षसिदाशुषे ।
अस्माकंगिरउतसुष्टुतिंवसोकण्ववच्छृणुधीहवम् ॥ ८ ॥

यस्मै । त्वम् । मघऽवन् । इन्द्र । गिर्वणः । शिक्षो इति । शिक्षसि । दाशुषे । अस्माकम् । गिरः । उत । सुऽस्तुतिम् । वसो इति । कण्वऽवत् । शृणुधि । हवम् ॥ ८ ॥

अस्ताविमन्मपूर्व्यंब्रह्मेन्द्रायवोचत ।
पूर्वीर्ऋतस्यंबृहतीरनूषतस्तोतुर्मेधाअसृक्षत ॥ ९ ॥

अस्तावि । मन्म । पूर्व्यम् । ब्रह्म । इन्द्राय । वोचत । पूर्वीः ।
ऋतस्य । बृहतीः । अनूषत । स्तोतुः । मेधाः । असृक्षत ॥ ९ ॥

समिन्द्रोरायोबृहतीरधूनुतसंक्षोणीसमुसूर्यम् ।
संशुक्रासःशुचयःसंगवाशिरःसोमाइन्द्रममन्दिषुः॥१०॥८॥

सम् । इन्द्रः । रायः । बृहतीः । अधूनुत । सम् । क्षोणी इति । सम्
ऊँम् इति । सूर्यम् । सम् । शुक्रासः । शुचयः । सम् । गोऽआशिरः ।
सोमाः । इन्द्रम् । अमन्दिषुः ॥ १०॥ ८ ॥

उपमंत्वाष्टौ मेध्यइन्द्रः प्रागाथं

उपमंत्वामघोनांज्येष्ठंचवृषभाणाम् ।
पूर्भित्तमंमघवन्निन्द्रगोविदमीशानंरायईमहे ॥ १ ॥

उपऽमम् । त्वा । मघोनाम् । ज्येष्ठम् । च । वृषभाणाम् ।
पूर्भित्ऽतमम् । मघऽवन् । इन्द्र । गोऽविदम् । ईशानम् । रायः ।
ईमहे ॥ १ ॥

यआयुंकुत्समतिथिग्वमर्दयोवावृधानोदिवेदिवे ।
तंत्वावयंहर्यश्वंशतक्रतुंवाजयन्तोहवामहे ॥ २ ॥

यः । आयुम् । कुत्सम् । अतिथिऽग्वम् । अर्दयः । वावृधानः ।
दिवेऽदिवे । तम् । त्वा । वयम् । हरिऽअश्वम् । शतऽक्रतुम् । वाजऽयन्तः ।
हवामहे ॥ २ ॥

आनोविश्वेषांरसंमध्वःसिञ्चन्त्वद्रयः ।
येपरावतिसुन्विरेजनेष्वायेअर्वावतीन्दवः ॥ ३ ॥

आ । नः । विश्वेषाम् । रसम् । मध्वः । सिञ्चन्तु । अद्रयः । ये ।
पराऽवति । सुन्विरे । जनेषु । आ । ये । अर्वाऽवति । इन्दवः ॥ ३ ॥

विश्वाद्द्वेषांसिजहिचावचाकृधिविश्वेसन्वन्त्वावसु।
शीर्ष्टेषुचित्तेमदिरासोअंशवोयत्रासोमस्यतृम्पसि ॥४॥१॥
विश्वा । द्वेषांसि । जहि । च । अव । च । आ । कृधि । विश्वे ।
सन्वन्तु । आ । वसु । शीर्ष्टेषु । चित् । ते । मदिरासः । अंशवः ।
यत्र । सोमस्य । तृम्पसि ॥ ४ ॥ १ ॥
इन्द्रनेदीयएदिहिमितमेधाभिरूतिभिः ॥
आशंतमशन्तमाभिरभिष्टिभिराश्वापेस्वापिभिः ॥ ५ ॥
इन्द्र । नेदीयः । आ । इत् । इहि । मितऽमेधाभिः । ऊतिऽभिः ।
आ । शम्ऽतम । शम्ऽतमाभिः । अभिष्टिऽभिः । आ । सुऽआपे ।
स्वापिऽभिः ॥ ५ ॥
आजितुरंसत्पतिंविश्वचर्षणिंकृधिप्रजास्वाभगम् ।
प्रसूतिराशचीभिर्येतउक्थिनःक्रतुंपुनतआनुषक् ॥ ६ ॥
आजिऽतुरम् । सत्ऽपतिम् । विश्वऽचर्षणिम् । कृधि । प्रऽजासु ।
आऽभगम् । प्र । सु । तिर । शचीभिः । ये । ते । उक्थिनः । क्रतुम् ।
पुनते । आनुषक् ॥ ६ ॥
यस्तेसाधिष्ठोवसेतेस्यामभरेषुते ।
वयंहोत्राभिरुतदेवहूतिभिःससवांसोमनामहे ॥ ७ ॥
यः । ते । साधिष्ठः । अवसे । ते । स्याम । भरेषु । ते । वयम् ।
होत्राभिः । उत । देवहूतिऽभिः । ससऽवांसः । मनामहे ॥ ७ ॥
अहंहितेहरिवोब्रह्मवाजयुराजिंयामिसदोतिभिः ।
त्वामिदेवतममेसमश्वयुर्गव्युरग्रेमथीनाम् ॥ ८ ॥ १० ॥
अहम् । हि । ते । हरिऽवः । ब्रह्म । वाजऽयुः । आजिम् । यामि ।
सदा । ऊतिऽभिः । त्वाम् । इत् । एव । तम् । अमे । सम् ।
अश्वऽयुः । गव्युः । अग्रे । मथीनाम् ॥ ८ ॥ १० ॥

एतत्तेष्टौ मेध्यइन्द्रः प्रागाथं आनोविश्वइतिद्वे वैश्वदेव्यौ

एतत्तंइन्द्रवीर्यंगीर्भिर्गृणन्तिकारवः ।
तेस्तोभन्तऊर्जमावन्घृतश्चुतंपौरासोनक्षन्धीतिभिः ॥ १ ॥

एतत् । ते । इन्द्र । वीर्यम् । गीःऽभिः । गृणन्ति । कारवः । ते । स्तोभन्तः । ऊर्जम् । आवन् । घृतश्चुतम् । पौरासः । नक्षन् । धीतिऽभिः ॥ १ ॥

नक्षन्तइन्द्रमवसेसुकृत्ययायेषांसुतेषुमन्दसे ।
यथासंवर्तेअमदोयथाकृशएवास्मेइन्द्रमत्स्व ॥ २ ॥

नक्षन्ते । इन्द्रम् । अवसे । सुऽकृत्यया । येषाम् । सुतेषु । मन्दसे । यथा । सम्ऽवर्ते । अमदः । यथा । कृशे । एव । अस्मे इति । इन्द्र । मत्स्व ॥ २ ॥

आनोविश्वेसजोषसोदेवासोगन्तनोपनः ।
वसवोरुद्राअवसेनआगमञ्छृण्वन्तुमरुतोहवम् ॥ ३ ॥

आ । नः । विश्वे । सऽजोषसः । देवासः । गन्तन । उप । नः । वसवः । रुद्राः । अवसे । नः । आ । गमन् । शृण्वन्तु । मरुतः । हवम् ॥ ३ ॥

पूषाविष्णुर्हवनंमेसरस्वत्यवन्तुसप्तसिन्धवः ।
आपोवातःपर्वतासोवनस्पतिःशृणोतुपृथिवीहवम् ॥ ४ ॥ ११ ॥

पूषा । विष्णुः । हवनम् । मे । सरस्वती । अवन्तु । सप्त । सिन्धवः । आपः । वातः । पर्वतासः । वनस्पतिः । शृणोतु । पृथिवी । हवम् ॥ ४ ॥ ११ ॥

यदिन्द्रराधोअस्तितेमाघोनंमघवत्तम ।
तेननोबोधिसधमाद्योवृधेभगोदानायवृत्रहन् ॥ ५ ॥

यत् । इन्द्र । राधः । अस्ति । ते । माघोनम् । मघवत्ऽतम । तेन ।
नः । बोधि । सधऽमाद्यः । वृधे । भगः । दानाय । वृत्रऽहन् ॥५॥

आजिपतेनृपतेत्वमिद्धिनोवाजआवंक्षिसुक्रतो ।
वीतीहोत्राभिरुतदेववीतिभिःससवांसोविशृण्विरे ॥ ६ ॥

आजिऽपते । नृऽपते । त्वम् । इत् । हि । नः । वाजे । आ ।
वक्षि । सुक्रतो इति सुऽक्रतो । वीती । होत्राभिः । उत ।
देववीतिऽभिः । ससऽवांसः । वि । शृण्विरे ॥६ ॥

सन्तिह्यर्यआशिषइन्द्रआयुर्जनानाम् ।
अस्मान्नक्षस्वमघवन्नुपावसेधुक्षस्वपिप्युषीमिषम् ॥७ ॥

सन्ति । हि । अर्यः । आऽशिषः । इन्द्रे । आयुः । जनानाम् ।
अस्मान् । नक्षस्व । मघऽवन् । उप । अवसे । धुक्षस्व ।
पिप्युषीम् । इषम् ॥ ७ ॥

वयंतइन्द्रस्तोमेभिर्विधेमत्वमस्माकंशतक्रतो ।
महिस्थूरंशशयंराधोअह्रयंप्रस्कण्वायनितोशय॥८॥१२॥

वयम् । ते । इन्द्र । स्तोमेभिः । विधेम । त्वम् । अस्माकम् ।
शतक्रतो इति शतऽक्रतो । महि । स्थूरम् । शशयम् । राधः ।
अह्रयम् । प्रस्कण्वाय । नि । तोशय ॥ ८ ॥ १२ ॥

भूरीत्पंच कृशइन्द्रो गायत्री तृतीयान्त्ये अनुष्टुभौ

भूरीदिन्द्रस्यवीर्यं१व्यख्यमभ्यायति । राधस्तेदस्यवेवृक॥ १ ॥

भूरि । इत् । इन्द्रस्य । वीर्यम् । वि । अख्यम् । अभि ।
आ । अयति । राधः । ते । दस्यवे । वृक ॥ १ ॥

शतंश्वेतासउक्षणोदिवितारोनरोचन्ते । मह्नादिवंनतस्तभुः ॥२॥

३

शतम् । श्वेतासः । उक्षणः । दिवि । तारः । न । रोचन्ते ।
मह्ना । दिवम् । न । तस्तभुः ॥ २ ॥

शतंवेणूञ्छतंशुनःशतंचर्माणिम्लातानि ।
शतंमेबल्वजस्तुकाअरुषीणांचतुःशतम् ॥ ३ ॥

शतम् । वेणून् । शतम् । शुनः । शतम् । चर्माणि । म्लातानि ।
शतम् । मे । बल्वजऽस्तुकाः । अरुषीणाम् । चतुःऽशतम् ॥ ३ ॥

सुदेवाःस्थकाण्वायनावयोवयोविचरन्तः ।
अश्वासोनचंक्रमत ॥ ४ ॥

सुऽदेवाः । स्थ । काण्वायनाः । वयःऽवयः । विऽचरन्तः ।
अश्वासः । न । चंक्रमत ॥ ४ ॥

आदित्साप्तस्यचर्किरन्नानूनस्यमहिश्रवः ।
श्यावीरतिध्वसन्पथश्चक्षुषाचनसंनशे ॥ ५ ॥ १३ ॥

आत् । इत् । साप्तस्य । चर्किरन् । न । अनूनस्य ।
महि । श्रवः । श्यावीः । अतिऽध्वसन् । पथः ।
चक्षुषा । चन । सम्ऽनशे ॥ ५ ॥ १३ ॥

प्रतितेपंच पृषध्रइन्द्रोगायत्री अन्त्याग्निसूर्यदेवताकापंक्तिः

प्रतितेदस्यवेवृकराधोअदर्श्यह्नयम् । द्यौर्नप्रथिनाशवः ॥ १ ॥

प्रति । ते । दस्यवे । वृक । राधः । अदर्शि । अह्नयम् ।
द्यौः । न । प्रथिना । शवः ॥ १ ॥

दशमह्यंपौतक्रतःसहस्रादस्यवेवृकः । नित्याद्रायोअमंहत ॥२॥

दश । मह्यम् । पौतऽक्रतः । सहस्रा । दस्यवे ।
वृकः । नित्यात् । रायः । अमंहत ॥ २ ॥

शतंमेगर्दभानांशतमूर्णावतीनाम् । शतंदासाँअतिस्रजः ॥ ३ ॥

शतम् । मे । गर्दभानाम् । शतम् । ऊर्णाऽवतीनाम् ।
शतम् । दासान् । अति । स्रजः ॥ ३ ॥

तत्रोअपिप्राणीयतपूतक्रतायैव्यक्ता । अश्वानामिन्नयूथ्याम् ॥ ४ ॥
तत्रो इति । अपि । प्र । अनीयत । पूतऽक्रतायै ।
विऽअक्ता । अश्वानाम् । इत् । न । यूथ्याम् ॥ ४ ॥

अचेत्यग्निश्चिकितुर्हव्यवाट्ससुमद्रथः ।
अग्निःशुक्रेणशोचिषाबृहत्सूरोअरोचतदिविसूर्योअरोचत ॥ ५ ॥ १४ ॥
अचेति । अग्निः । चिकितुः । हव्यऽवाट् । सः । सुमत्ऽरथः ।
अग्निः । शुक्रेण । शोचिषा । बृहत् । सूरः । अरोचत ।
दिवि । सूर्यः । अरोचत ॥ ५ ॥ १४ ॥

युवंदेवाश्वतुर्मेध्य आश्विनंत्रैष्टुभं

युवंदेवाक्रतुनापूर्व्येणयुक्तारथेनतविषंयजत्रा ।
आगच्छतंनासत्याशचीभिरिदंतृतीयंसवनंपिबाथः ॥ १ ॥
युवम् । देवा । क्रतुना । पूर्व्येण । युक्ताः । रथेन । तविषम् ।
यजत्रा । आ । अगच्छतम् । नासत्या । शचीभिः ।
इदम् । तृतीयम् । सवनम् । पिबाथः ॥ १ ॥

युवांदेवास्त्रयएकादशासःसत्याःसत्यस्यददृशेपुरस्तात् ।
अस्माकंयज्ञंसवनंजुषाणापातंसोममश्विनादीद्यग्नी ॥ २ ॥
युवाम् । देवाः । त्रयः । एकादशासः । सत्याः । सत्यस्य । ददृशे ।
पुरस्तात् । अस्माकम् । यज्ञम् । सवनम् । जुषाणा । पातम् ।
सोमम् । अश्विना । दीद्यग्नी इति दीदिऽअग्नी ॥ २ ॥

पनाय्यंतदश्विनाकृतंवांवृषभोदिवोरजसःपृथिव्याः ।
सहस्रंशंसाउतयेगविष्टौसर्वाँइत्ताँउपयातापिबध्यै ॥ ३ ॥

पुनाय्यम् । तत् । अश्विना । कृतम् । वाम् । वृषभः । दिवः ।
रजसः । पृथिव्याः । सहस्रम् । शंसाः । उत । ये । गोऽइंष्टौ ।
सर्वान् । इत् । तान् । उप । यात । पिबध्यै ॥ ३ ॥
अयंवांभागोनिहितोयजत्रेमागिरोनासत्योपयातम् ।
पिबतंसोमंमधुमन्तमस्मेप्रदाश्वांसमवतंशचीभिः ॥ ४ ॥ १५ ॥
अयम् । वाम् । भागः । निऽहितः । यजत्रा । इमाः । गिरः ।
नासत्या । उप । यातम् । पिबतम् । सोमम् । मधुऽमन्तम् ।
अस्मे इति । प्र । दाश्वांसम् । अवतम् । शचीभिः ॥ ४ ॥ १५ ॥
यमृत्विजस्तिस्रोमेध्योवैश्वदेवं त्रिष्टुप् आद्याकृत्विक्स्तुतिर्वा
यमृत्विजोबहुधाकल्पयन्तःसचेतसोयज्ञमिमंवहन्ति ।
योअनूचानोब्राह्मणोयुक्तआसीत्कास्वित्तत्रयजमानस्यसंवित् ॥ १ ॥
यम् । ऋत्विजः । बहुधा । कल्पयन्तः । सऽचेतसः । यज्ञम् ।
इमम् । वहन्ति । यः । अनूचानः । ब्राह्मणः । युक्तः । आसीत् ।
का । स्वित् । तत्र । यजमानस्य । सम्ऽवित् ॥ १ ॥
एकएवाग्निर्बहुधासमिद्धएकःसूर्योविश्वमनुप्रभूतः ।
एकैवोषाःसर्वमिदंविभात्येकंवाइदंविबभूवसर्वम् ॥ २ ॥
एकः । एव । अग्निः । बहुधा । सम्ऽइद्धः । एकः । सूर्यः । विश्वम् ।
अनु । प्रऽभूतः । एका । एव । उषाः । सर्वम् । इदम् । वि ।
भाति । एकम् । वै । इदम् । वि । बभूव । सर्वम् ॥ २ ॥
ज्योतिष्मन्तंकेतुमन्तंत्रिचक्रंसुखंरथंसुषदंभूरिवारम् ।
चित्रामघायस्ययोगेधिजज्ञेतंवांहुवेअतिरिक्तंपिबध्यै ॥ ३ ॥ १६ ॥
ज्योतिष्मन्तम् । केतुऽमन्तम् । त्रिऽचक्रम् । सुऽखम् । रथम् ।
सुऽसदम् । भूरिऽवारम् । चित्रऽमघा । यस्य । योगे । अधिऽजज्ञे ।
तम् । वाम् । हुवे । अति । रिक्तम् । पिबध्यै ॥ ३ ॥ १६ ॥

इमानिवां सप्त सुपर्णं ऐन्द्रावरुणं जागतं

इमानिवांभागधेयानिसिस्रतइन्द्रावरुणाप्रमहेसुतेषुवाम्।
यज्ञेयज्ञेहसवनाभुरण्यथोयत्सुन्वतेयजमानायशिक्षथः ॥ १ ॥

इमानि। वाम्। भागऽधेयानि। सिस्रते। इन्द्रावरुणा। प्र। महे।
सुतेषु। वाम्। यज्ञेऽयज्ञे। ह। सवना। भुरण्यथः। यत्।
सुन्वते। यजमानाय। शिक्षथः ॥ १ ॥

निष्षिध्वरीरोषधीरापआस्तामिन्द्रावरुणामहिमानमाशत।
यासिस्रतूरजसःपारेअध्वनोययोःशत्रुर्नकिरादेवओहते ॥ २ ॥

निःऽसिध्वरीः। ओषधीः। आपः। आस्ताम्। इन्द्रावरुणा।
महिमानम्। आशत। या। सिस्रतुः। रजसः। पारे। अध्वनः।
ययोः। शत्रुः। नकिः। अदेवः। ओहते ॥ २ ॥

सत्यंतदिन्द्रावरुणाकृशस्यवांमध्वऊर्मिंदुहतेसप्तवाणीः।
ताभिर्दाश्वांसमवतंशुभस्पतीयोवामदब्धोअभिपातिचित्तिभिः॥ ३

सत्यम्। तत्। इन्द्रावरुणा। कृशस्य। वाम्। मध्वः। ऊर्मिम्।
दुहते। सप्त। वाणीः। ताभिः। दाश्वांसम्। अवतम्। शुभः।
पती इति। यः। वाम्। अदब्धः। अभि। पाति। चित्तिऽभिः ॥ ३॥

घृतप्रुषःसौम्याजीरदानवःसप्तस्वसारःसदनऋतस्य।
याहवामिन्द्रावरुणाघृतश्चुतस्ताभिर्धत्तंयजमानायशिक्षतम्॥४॥१७॥

घृतऽप्रुषः। सौम्याः। जीरऽदानवः। सप्त। स्वसारः। सदने।
ऋतस्य। याः। ह। वाम्। इन्द्रावरुणा। घृतऽश्चुतः। ताभिः।
धत्तम्। यजमानाय। शिक्षतम् ॥ ४ ॥ १७ ॥

अवोचाममहतेसौभगायसत्यंत्वेषाभ्यांमहिमानमिन्द्रियम्।
अस्मान्त्स्विन्द्रावरुणाघृतश्चुतस्त्रिभिःसाप्तेभिरवतंशुभस्पती ॥५॥

अवोचाम । महते । सौभगाय । सत्यम् । त्वेषाभ्याम् । महिमानम् ।
इन्द्रियम् । अस्मान् । सु । इन्द्रावरुणा । घृतऽश्चुतः । त्रिऽभिः ।
साप्तेभिः । अवतम् । शुभः । पती इति ॥ ५ ॥

इन्द्रावरुणायदृषिभ्योमनीषांवाचोमतिंश्रुतमदत्तमग्रे ।
यानिस्थानान्यसृजन्तधीरायज्ञंतन्वानास्तपसाभ्यपश्यम् ॥ ६ ॥
इन्द्रावरुणा । यत् । ऋषिऽभ्यः । मनीषाम् । वाचः । मतिम् । श्रुतम् ।
अदत्तम् । अग्रे । यानि । स्थानानि । असृजन्त । धीराः ।
यज्ञम् । तन्वानाः । तपसा । अभि । अपश्यम् ॥ ६ ॥

इन्द्रावरुणासौमनसमदृप्तंरायस्पोषंयजमानेषुधत्तम् ।
प्रजांपुष्टिंभूतिमस्मासुधत्तंदीर्घायुत्वायप्रतिरतंनआयुः ॥७॥१८॥
इन्द्रावरुणा । सौमनसम् । अदृप्तम् । रायः । पोषम् । यजमानेषु ।
धत्तम् । प्रऽजाम् । पुष्टिम् । भूतिम् । अस्मासु । धत्तम् ।
दीर्घायुऽत्वाय । प्र । तिरतम् । नः । आयुः ॥ ७ ॥ १८ ॥

॥ इति वालखिल्यं समाप्तम् ॥

सप्तमाष्टकस्यद्वितीयाध्यायेअष्टादशवर्गानंतरं विंशतिऋगात्मकमिदंपरिशिष्टं

पावमानीःस्वस्त्ययनीःसुदुघाहिघृतश्चुतः । ऋषिभिःसंभृतोरसोब्राह्मणेष्वमृतंहितं ॥ १ ॥ पावमानीर्दिशंतुनइमंलोकमथोअमुं । कामान्समर्धयन्तुनोदेवीर्देवीःसमाहिताः ॥ २ ॥ येनदेवाःपवित्रेणात्मानंपुनतेसदा । तेनसहस्रधारेणपावमान्यःपुनंतुमा ॥ ३ ॥ प्राजापत्यंपवित्रंशतोद्यामंहिरण्मयं । तेनब्रह्मविदोवयंपूतंब्रह्मपुनीमहे ॥ ४ ॥ इन्द्रःपुनीहीसहमांपुनातुसोमःस्वस्त्यावरुणःसमीच्या । यमोराजाप्रमृणाभिःपुनातुमाजातवेदामूर्जयन्त्यापुनातु ॥५॥ ऋषयस्तुतपस्तेपुः

सर्वैस्स्वर्गैर्जिगीषवः । तपस्सस्तपसोग्र्यंतुपावमानीक्रृचोब्रवीत् ॥ ६ ॥ यन्मेगर्भेंवसंतःपापमुग्रंयज्जायमानस्यचकिंचिदन्यत् । जातस्यच-यच्चापिचवर्धतोमेतत्पावमानीभिरहंपुनामि ॥ ७ ॥ मातापित्रोर्यन्न-कृतंवचोमेयत्स्थावरंजंगमंमाबभूव । विश्वस्यतत्प्रह्वषितंवचोमेतत्पाव मानीभिरहंपुनामि ॥ ८ ॥ गोघ्नात्तस्करत्वात्स्त्रीवधाद्यच्चकिल्बिषं । पापकंचचरणेभ्यस्ततत्पावमानीभिरहंपुनामि ॥ ९ ॥ ब्रह्मवधात्सुरा-पानात्स्वर्णस्तेयाद्वृषल्गिमनमैथुनसंगमात्। गुरोर्दाराधिगमनाच्चतत्पा-वमानीभिरहंपुनामि ॥१० ॥ बालघ्नान्मातृपितृवधाद्भूमितस्करात्स-र्वंवर्णगमनमैथुनसंगमात् । पापेभ्यश्चप्रतिग्रहात्सद्यःप्रहरतिसर्वंदुष्कृतं तत्पावमानीभिरहंपुनामि ॥ ११ ॥ क्रयविक्रयाद्योनिदोषाद्भक्षाद्भो-ज्यात्प्रतिग्रहात् । असंभोजनाच्चापिनृशंसंतत्पावमानीभिरहंपुनामि ॥ १२ ॥ दुर्यष्टंदुरधीतंपापंयच्चाज्ञानतोकृतं । अयाजिताश्चासंया-ज्यास्तत्पावमानीभिरहंपुनामि ॥ १३ ॥ अमंत्रमन्नंयत्किंचिद्धूयते-चहुताशने । संवत्सरकृतंपापंतत्पावमानीभिरहंपुनामि ॥ १४ ॥ ऋतस्ययोनयोमृतस्यधामविश्वादेवेभ्यःपुण्यगन्धाः । तानआपःप्र-वहन्तुपापंशुद्धागच्छामिसुकृतामुलोकंतत्पावमानीभिरहंपुनामि॥१५ पावमानीःस्वस्त्ययनीर्याभिर्गच्छतिनांदनं । पुण्यांश्चभक्षान्भक्षयत्य-मृतत्वंचगच्छति ॥ १६ ॥ पावमानींपितॄन्देवान्ध्यायेद्यश्चसरस्वतीं । पितॄंस्तस्योपवर्तेतक्षीरंसर्पिर्मधूदकं ॥ १७ ॥ पावमानंपरंब्रह्मशुक्रं-ज्योतिःसनातनं । ऋषींस्तस्योपतिष्ठेतक्षीरंसर्पिर्मधूदकं ॥ १८ ॥ पावमानंपरंब्रह्मयेपठन्तिमनीषिणः । सप्तजन्मभवेद्विप्रोधनाढ्योवे-दपारगाः ॥ १९ ॥ दशोत्तराण्यृचांश्चैवपावमानीःशतानिषट् । एत-ज्जुह्वंजपेन्मंत्रैघोरमृत्युभयंहरेत् ॥ २० ॥

सप्तमाष्टकस्यपंचमाध्याये अष्टाविंशतिवर्गानन्तरं पंचचैपरिशिष्टं

यत्रतत्परमंपदंविष्णोर्लोकेमहीयते । देवैःसुकृतकर्मभिस्तत्रमामृतंकृधीन्द्रायेन्दोपरिस्रव ॥ १ ॥ यत्रतत्परमाव्यंभूतानामधिपतिं । भावभावीचयोगीश्चतत्रमाममृतंकृधीन्द्रायेन्दोपरिस्रव ॥ २ ॥ यत्रलोकास्तनूत्यजाःश्रद्धयातपसाजिताः । तेजश्चयत्रब्रह्मचतत्रमाममृतंकृधीन्द्रायेन्दोपरिस्रव ॥ ३ ॥ यत्रदेवामहात्मानःसेन्द्राश्चमरुद्गणाः । ब्रह्माचयत्रविष्णुश्चतत्रमाममृतंकृधीन्द्रायेन्दोपरिस्रव ॥ ४ ॥ यत्रगंगाचयमुनाचयत्रप्राचीसरस्वती । यत्रसोमेश्वरोदेवस्तत्रमाममृतंकृधीन्द्रायेन्दोपरिस्रव ॥ ५ ॥

अष्टमाष्टकस्य तृतीयाध्याये षड्वर्गानन्तरं इयमेकाऋक्पठ्यते

सितासितेसरितेयत्रसंगथेतत्राप्लुतासोदिवमुत्पतन्ति । येवैतन्वं विसृजन्तिधीरास्तेजनासोअमृतत्वंभजन्ते ॥ १ ॥

अष्टमाष्टकस्यतृतीयाध्याये अष्टाविंशतिवर्गानन्तरंऋक्षट्कमिदंपरिशिष्टं

अविधवाभववर्षाणिशतंसाग्रंतुसुव्रता । तेजस्वीचयशस्वीचधर्मपत्नीपतिव्रता १ जनयद्बहुपुत्राणिमाचदुःखंलभेत्कंचित् ॥ भर्तातेसोमपानित्यंभवेद्धर्मपरायणः २ अष्टपुत्राभवत्वंचसुभगाचपतिव्रता । भर्तुश्चैवपितुर्भ्रातुर्हृदयानन्दिनीसदा ३ इन्द्रस्यतुयथेन्द्राणीश्रीधरस्ययथाश्रिया । शंकरस्ययथागौरीतद्भर्तुरपिभर्तरि ॥ ४ ॥ अत्रेर्यथानुसूयास्याद्वसिष्ठस्याप्यरुंधती । कौशिकस्ययथासतीतथात्वमपिभर्तरि ॥ ५ ॥ ध्रुवैधिपोष्यामयिमह्यंत्वादाद्बृहस्पतिः । मयापत्याप्रजावतीसंजीवशरदःशतं ॥ ६ ॥

अष्टमाष्टकस्य पंचमाध्याये त्रयोविंशतिवर्गानन्तरं ऋग्द्वयमिदंपठ्यते

असौयासेनामरुतःपरेषामभ्यैतिनओजसास्पर्धमाना । तां

गूहतमसापव्रतेनयथामीषांअन्योअन्यंनजानात् ॥ १ ॥ अन्धा
अमित्राभवताशीर्षाणाअहयइव । तेषांवोअग्निदग्धानामग्निमूढा-
नामिन्द्रोहन्तुवरंवरं ॥ २ ॥

अष्टमाष्टकस्य षष्ठाध्याये द्वितीयवर्गान्ते इयमेका ऋक्पठ्यते

हविर्भिरेकेस्वरितःसचन्तेसुन्वन्तएकेसवनेषुसोमान् । शचीर्मद-
न्तउतदक्षिणाभिर्नैज्जिह्मायन्त्योनरकंपताम ॥ १ ॥

अष्टमाष्टकस्य सप्तमाध्याये चतुर्दशवर्गानन्तरंपंचविंशतिऋगात्मकमिदंपरिशिष्टं

आरात्रिपार्थिवंरजःपितरःप्रायुधामभिः । दिवःसदांसिबृहती-
वितिष्ठसआत्वेषंवर्ततेतमः १ येतेरात्रीनृचक्षसोयुक्तासोनवतिर्नव ।
अशीतिःसन्त्वष्टाउतोतेसप्तसप्ततीः ॥ २ ॥ रात्रींप्रपद्येजननींसर्वभूत-
निवेशनीं। भद्रांभगवतींकृष्णांविश्वस्यजगतोनिशां॥३॥ संवेशनींसंय-
मिनींग्रहनक्षत्रमालिनीं । प्रपन्नोहंशिवांरात्रींभद्रेपारमशीमहिभद्रे-
पारमशीमह्योंनमः॥४॥ स्तोष्यामिप्रयतोदेवींशरण्यांबह्वृचप्रियां ॥-
सहस्रसंमितांदुर्गांजातवेदसेसुनवामसोमं॥५॥शांत्यर्थंतद्विजातीनामृ-
षिभिःसोमपाश्रिताः।ऋग्वेदेत्वंसमुत्पन्नामरातीयतोनिदहातिवेदः॥ ६
येत्वांदेविप्रपद्यन्तिब्राह्मणाहव्यवाहनीं । अविद्याबहुविद्यांवासनः
पर्षदतिदुर्गाणिविश्वा ॥ ७ ॥ येअग्निवर्णांशुभांसौम्यांकीर्तयिष्यन्ति-
येद्विजाः । तांतारयतिदुर्गाणिनावेवसिन्धुंदुरितात्यग्निः ॥ ८ ॥ दु-
र्गेषुविषमेघोरेसंग्रामेरिपुसंकटे । अग्निचोरनिपातेचसर्वग्रहनिवारणे-
दुष्टग्रहनिवारण्योन्नमः॥९॥ दुर्गेषुविषमेषुत्वंसंग्रामेषुवनेषुच। मोहयि-
त्वाप्रपद्यन्तेतेषांमेअभयंकुरुतेषांमेअभयंकुर्वोन्नमः॥१०॥ केशिनींस-
र्वभूतानांपंचमीतिचनामच॥सामांसमादिशादेवीसर्वतःपरिरक्षतुसर्वतः
परिरक्षत्वोन्नमः ॥ ११ ॥ तामग्निवर्णांतपसाज्वलन्तींवैरोचनींकर्मफ-

लेषुजुष्टां । दुर्गादेवींशरणमहंप्रपद्येसुतरंसितरसेनमः सुतरंसितरसेनमः ॥१२ ॥ दुर्गादुर्गेषुस्थानेषुशंनोदेवीरभिष्टये । यइमंदुर्गास्तवंपुण्यंरात्रौरात्रौसदापठेत्॥१३॥ रात्रिःकुशिकःसौभरोरात्रिर्वाभारद्वाजीरात्रिस्तवंगायत्रं॥रात्रिसूक्तंजपेन्नित्यंतत्कालउपपद्यते ॥ १४।३ ॥ हिमस्यंत्वाजरायुणाशालेपरिव्ययामसि । उतह्रदोहिंनोभियोग्निर्ददातुभेषजम् ॥१५॥ शीतह्रदोहिंनोभियोग्निर्ददातुभेषजं । अन्तिकामग्निमंजयद्दूर्वांदःशिशुलागमत् ॥ १६ ॥ अजातपुत्रपक्षायांहृदयंममदूयते । विपुलंधनंबह्वाकाशंतवजातवेदःकामाय ॥ १७ ॥ मांचरक्षपुत्रांश्चशरणमभूत्तव । पिंगाक्षलोहितग्रीवकृष्णवर्णनमोस्तुते॥ १८ ॥ अस्मान्निवर्हरस्योनंसागरस्योर्मयोयथा । इन्द्रक्षत्रंददातुवरुणमभिषिंचतु ॥ १९ ॥ शत्रवोनिधनंयान्तुजयस्त्वंब्रह्मतेजसा ॥ २० ॥ कपिलजटींसर्वभक्षंचाग्निंप्रत्यक्षदैवतं । वरुणंचवशाम्यग्रेममपुत्रांश्चरक्षंतुममपुत्रांश्चरक्षत्वोन्नमः ॥ २१ ॥ साग्रंवर्षशतंजीवपिबखादचमोदच । दुःखितांनद्विजांश्चैवप्रजांचपशुपालय ॥ २२॥ यावदादित्यस्तपतियावद्भ्राजतिचन्द्रमाः । यावद्वायुःप्लवायतितावज्जीवजयाजय ॥ २३ ॥ येनकेनप्रकारेणकोहिनामनजीवति । परेषामुपकारार्थंयज्जीवतिसजीवति ॥ २४ ॥ नचोरभयंनचसर्पभयंनचव्याघ्रभयंनचमृत्युभयं । यस्यापमृत्युर्नचमृत्युःसस्सर्वंलभतेसस्सर्वंजयते । एतांवैश्वानरींसर्वदेवनमोस्तुते ॥ २५ ॥

अष्टमाष्टकस्य सप्तमाध्याये षोडशवर्गानन्तरमियमेकाऋक् आयुष्यमित्येकादशर्चंसूक्तंच परिशिष्टं ।

अर्वांचमिन्द्रममुतोहवामहेयोगोजिद्धनजिदश्वजिद्यः । इमंनोयज्ञंविहवेजुषस्वास्यकुल्मोहरिवोमेदिनंत्वा ॥ १ ॥

आयुष्यंवर्चस्यंरायस्पोषमौद्भिदं । इदंहिरण्यंवर्चस्वज्जैत्रायाविशता

दि॒मां ॥ १ ॥ उ॒च्चैर्वा॒जिपृत॑नाषाट्स॒भासा॒हंध॑नंज॒यं । सर्वा॒ःसम॑ग्रा॒-ऋद्ध॑यो॒हिर॑ण्ये॒स्मिन्त्स॒माहि॑ताः ॥ २ ॥ शु॒नम॒हंहिर॑ण्यस्यपि॒तुर्नाम॑वज॒ग्रभं । तेन॒मांसूर्य॑त्वच॒मकरं॒पूरु॑षुप्रि॒यं ॥ ३ ॥ स॒म्राजं॑चवि॒राजं॑चाभि॒ष्टिर्या॑चमे॒ध्रुवा । लक्ष्मीरा॒ष्ट्रस्य॒याम॑खे॒तया॒मामिन्द्र॒संसृ॑ज ॥ ४ ॥ अ॒ग्नेःप्रजा॑तं॒परि॒यद्धिर॑ण्यम॒मृतं॑य॒ज्ञेअधि॒मर्त्ये॑षु । यएं॑न॒द्वेद॒सइदेनम॑र्हतिज॒रामृत्यु॒र्भ॑वति॒योबि॒भर्ति॑ ॥ ५ ॥ यद्वेद॒राजा॒वरु॑णो॒यद्वु॒देवीसर॑स्वती ॥ इन्द्रो॒यद्वृ॑त्र॒हावेद॒तन्मे॒वर्च॑स॒आयु॑षे ॥ ६ ॥ नतद्रक्षां॑सि॒नपि॑शा॒चाश्च॑रन्ति॒दे॒वाना॒मोजः॑प्रथम॒जंह्ये॑१तत् ॥ योबि॒भर्ति॑दाक्षाय॒णाहिर॑ण्यं॒सदे॒वेषु॑कृणुतेदी॒र्घमायुः॒सम॑नुष्ये॑षुकृणुतेदी॒र्घमायुः॑ ॥ ७ ॥ य॒दाब॑ध्नंदाक्षाय॒णाहिर॑ण्यंश॒तानी॑काय॒सुमन॒स्यमा॑ना ॥ तन्म॒आब॑ध्नामिश॒तशा॑रदा॒यायु॑ष्मांज॒रद॑ष्टि॒र्यथास॑त् ॥ ८ ॥ घृ॒तादुल्लु॑सं॒ मधु॑मत्सुव॒र्णंधनं॑ज॒यंध॒रुणं॑धारयि॒ष्णु । ऋ॒णक्स॒पत्ना॒दध॑रांश्च॒कृ॒ण्वदारो॑ह॒मांम॑ह॒तेसौभ॑गाय ॥ ९ ॥ प्रि॒यंमा॑कुरुदे॒वेषु॑प्रि॒यंराज॑स॒ुमाकुरु । प्रि॒यंविश्वे॑षुगो॒प्त्रेषु॒मयि॑धेहिरु॒चारु॑चं ॥ १० ॥ अ॒ग्निर्ये॑नवि॒राज॑ति॒सूर्यो॒येन॑वि॒राज॑ति ॥ वि॒राज्येन॒विराज॑ति॒तेना॒स्मान्ब्र॑ह्मणस्पते॒विराज॑स॒मिधं॑कुरु ॥ ११ ॥

अष्टमाष्टकस्याष्टमाध्याये नवमवर्गानन्तरं दशर्चमिदं मेधासूक्तसंज्ञकं परिशिष्टं

मे॒धाम॒ह्यमंगि॑रसो॒मे॒धां॒स॒प्तऋष॑यो॒दद॒ुः ॥ मे॒धामिन्द्र॑श्चा॒ग्निश्च॒मे॒धांधा॒तादद॑दातु॒ते ॥ १ ॥ मे॒धांते॒वरु॑णोरा॒जामे॒धांदे॒वीसर॑स्वतीमे॒धांते॑अ॒श्विनौ॑दे॒वावाध॑त्तां॒पुष्क॑रस्रजा ॥ २ ॥ यामे॒धाअ॑प्स॒रासु॑गं॒धर्वे॑षु॒चय॒न्मनः॑ ॥ दैवी॒यामानु॑षीमे॒धासामा॒मावि॑शता॒दि॒मां ॥ ३ ॥ यन्मे॒नोक्तं॒तद्र॑मतां॒शके॑यं॒यद॑नु॒ब्रुवे ॥ निशा॑मतं॒निशा॒मयि॒मयि॑व्र॒तंसह॑प्रि॒येण॑भू॒यासं॒ब्रह्म॑णा॒संगमे॑महि ॥ ४ ॥ शरी॑रंमे॒विच॑क्षण॒वाङ्मे॒मधु॑म॒द्दुहा॑ ॥ अवृ॑द्धम॒हम॒सौसूर्यो॒ब्रह्म॑णा॒नीस्थः॑श्रु॒तंमे॒माप्रहा॑सीः ॥ मे॒धांदे॒वींस॒मं

नसांरेजमानांगंधर्वजुष्टांप्रतिनोजुषस्व ॥ मह्यंमेधांवदमह्यंश्रियंवदमे-धावीभूयासमजराजरिष्णु ॥ ६ ॥ सदसस्पतिमद्भुतंप्रियमिन्द्रस्यकाम्यं ॥ सनिंमेधामयासिषं ॥ ७ ॥ यांमेधांदेवगणाःपितरश्चोपासते ॥ तयामामेधयाग्नेमेधाविनंकुरु ॥ ८ ॥ मेधाव्यंसुमनाःसुप्रतीकःश्रद्धामनाःसत्यमतिःसुशेवः । महायशाधारयिष्णुप्रवक्ताभूयासमस्येस्वधया प्रयोगे ॥ ९ ॥ नाशयित्रीपलाशस्यारुषसोपथिकामसु । अथोतुतस्ययक्ष्माणांपापारोगनाशिनी ॥ १० ॥

अष्टमाष्टकस्य अष्टमाध्याये द्विचत्वारिंशद्वर्गानन्तरं नेजमषेतितृचंपरिशिष्टं

नेजमेषपरापतसुपुत्रःपुनरापत । अस्यैमेपुत्रकामायैगर्भमाधेहि यःपुमान् ॥ १ ॥ यथेयंपृथिवीमह्युत्तानागर्भमादधे । एवंतंगर्भमाधेहिदशमेमासिसूतवे ॥ २ ॥ विष्णोःश्रेष्ठेनरूपेणास्यांनार्यांगवीन्यां । पुमांसंपुत्रानाधेहिदशमेमासिसूतवे ॥ ३ ॥

अष्टमाष्टअस्य अष्टमाध्याये षट्चत्वारिंशद्वर्गानन्तरमियमेकाऋक्पठ्यते ।

अनीकवन्तमूतयेग्निंगीर्भिर्हवामहे । सनःपर्षदतिद्विषः ॥ १ ॥

अष्टमाष्टकस्य अष्टमाध्यायान्ते इदंचतुर्दशर्चं संज्ञानसूक्तसंज्ञकं परिशिष्टं

संज्ञानमुशनावदत्संज्ञानंवरुणोवदत् ॥ संज्ञानमिन्द्रश्चाग्निश्चसंज्ञानंसवितावदत् ॥ १ ॥ संज्ञानंनःस्वेभ्यःसंज्ञानमरणेभ्यः ॥ संज्ञानमश्विनायुवमिहास्मासुनियच्छतां ॥ २ ॥ यत्कक्षीवांसंवननंपुत्रोअंगिरसाभवेत् ॥ तेननोद्यविश्वेदेवाःसंप्रिजांसमजीजनन् ॥ ३ ॥ संवोमनांसिजानतांसमाकूतिर्मनामसि ॥ असौयोविमनानसस्तंसमावर्तयामसि ॥ ४ ॥ नैहस्त्यंसेनादरणंपरिवर्त्मतुयद्धविः । तेनामित्राणांबाहून्हविषा शोषयामसि ॥ ५ ॥ परिवर्त्मान्येषामिन्द्रःपूषाचसस्रतुः । तेषांवोअग्निदग्धानामग्निमूढानामिन्द्रोहन्तुवरंवरं ॥ ६ ॥ ऐषुनह्यवृषाजिनंहरिण

स्यधियंयथा ॥ परांअमित्राँऐषत्वर्वाचींगौरुपाजंतु ॥ ७ ॥ प्राध्वराणांपतेवसोहोतर्वरेण्यक्रतो । तुभ्यंगायत्रमृच्यते ॥ ८ ॥ गोकामोअन्नंकामःप्रजाकामउतकश्यपः । भूतंभविष्यत्प्रस्तौतिसहब्रह्मैकमक्षरं बहुब्रह्मैकमक्षरं ॥ ९ ॥ यदक्षरंभूतकृतंविश्वेदेवाउपासते । महर्षिमस्यगोप्तारंजमदग्निरकुर्वतं ॥ १० ॥ जमदग्निराप्यायतेछन्दोभिश्चतुरुत्तरैः । राजासोमस्यभक्षेणब्रह्मणावीर्यावताशिवानःप्रदिशोदिशःसत्यानःप्रदिशोदिशः ॥ ११ ॥ अजोयत्तेजोददृश्रेशुक्रंज्योतिःपरोगुहा॥यदृषिःकश्यपःस्तौतिसत्यंब्रह्मचराचरंध्रुवंब्रह्मचराचरं॥१२॥ त्र्यायुषंजमदग्नेःकश्यपस्यत्र्यायुषमगस्त्यस्यत्र्यायुषं । यद्देवानांत्र्यायुषंतन्मेअस्तुत्र्यायुषंसर्वमस्तुशतायुषंब्रह्मायुषं ॥ १३ ॥ तच्छंयोरावृणीमहेगातुंयज्ञायगातुंयज्ञपतयेदैवीःस्वस्तिरस्तुनः । स्वस्तिर्मानुषेभ्यऊर्ध्वंजिगातुभेषजंशंनोअस्तुद्विपदेशंचतुष्पदे ॥ १४ ॥

इतिपरिशिष्टानिसमाप्तानि ॥

# ॥ अथ निविदध्यायः ॥



श्रीगणेशायनमः ॥ ॐम् अग्निर्देवेद्धः ॥ अग्निर्मन्विद्धः ॥ अग्निःसुष मित् ॥ होतादेवदृतः ॥ होतामनुवृतः ॥ प्रणीर्यज्ञानां ॥ रथीरध्वरा णाम् ॥ अतूर्तोहोता ॥ तूर्णिर्हव्यवाट् ॥ आदेवोदेवान्वक्षत् ॥ यक्षद ग्निर्देवोदेवान् ॥ सोअध्वराकरतिजातवेदाः ॥ १२ ॥ १ ॥ इन्द्रोमरु त्वान्सोमस्यपिबतु ॥ मरुत्स्तोत्रोमरुद्गणः ॥ मरुत्सखामरुद्वृधः ॥ घ्न न्वृत्राणृजदपः ॥ मरुतामोजसासह ॥ यईमेनंदेवाअन्वमदन् ॥ असू र्यैवृत्रतूर्ये ॥ शंबरहत्येगविष्टौ ॥ अर्चंतंगुह्यापदा॥परमस्यांपरावति ॥ आदींब्रह्माणिवर्धयन् ॥ अनाधृष्टान्योजसा ॥ कृण्वंदेवेभ्योदुवः ॥ मरुद्भिःसखिभिःसह ॥ इंद्रोमरुत्वाँइहश्रवदिहसोमस्यपिबतु ॥ प्रेमां देवोदेवहूतिमवतुदेव्याधिया ॥ प्रेदंब्रह्मप्रेदंक्षत्रं ॥ प्रेमंसुन्वंतंयजमा नमवतु ॥ चित्रश्चित्राभिरूतिभिः॥ श्रवद्ब्रह्माण्यावसागमत्॥२०॥२॥ इंद्रोदेवःसोमंपिबतु ॥ एकजानांवीरतमः॥ भूरिदानंतवस्तमः॥ हर्योः स्थाता ॥ पृश्नेःप्रेता ॥ वज्रस्यभर्ता ॥ पुरांभेत्ता ॥ पुरांदर्मा ॥ अपां स्रष्टा ॥ अपान्नेता ॥ सत्वनांनेता ॥ ऋजीषिर्दूरेश्रवाः ॥ उपमातिकृ द्दंसनावान् ॥ इहोशंदेवोबभूवान् ॥ इंद्रोदेवइहश्रवदिहसोमस्यपिब तु ॥ प्रेमांदेवोदेवहूतिमवतुदेव्याधिया ॥ प्रेदंब्रह्मप्रेदंक्षत्रं । प्रेमंसुन्व न्तंयजमानमवतु । चित्रश्चित्राभिरूतिभिः । श्रवद्ब्रह्माण्यावसागम त् ॥ २० ॥ ३ ॥ सवितादेवःसोमस्यपिबतु ॥ हिरण्यपाणिःसुजिह्वः॥ सुबाहुःस्वंगुरिः ॥ त्रिरहन्त्सत्यसवनः ॥ यःप्रासुवद्वसुधीती ॥ उभेजो ष्ट्रीसवीमनि ॥ श्रेष्ठंसावित्रमासुवं ॥ दोग्ध्रींधेनुं ॥ वोह्लारमनड्वाहं॥ आशुंसप्तिं ॥ पुरंधियोषां ॥ जिष्णुंरथेष्ठां॥सभेयंयुवानं॥ परामीवांसा

विषत्पराघशंसं ॥ सवितादेवइहश्रवदिहसोमस्यमत्सत् ॥ प्रेमांदेवोदेवहूतिमवतुदेव्याधिया । प्रेदंब्रह्मप्रेदंक्षत्रं । प्रेमंसुन्वन्तंयजमानमवतु । चित्रश्चित्राभिरूतिभिः । श्रवद्ब्रह्माण्यावसागमत् ॥ २० ॥ ४ ॥ द्यावापृथिवीसोमस्यमत्सतां ॥ पिताचमाताच ॥ पुत्रश्चप्रजननंच ॥ धेनुश्चऋषभश्च ॥ धन्याचधिषणाच ॥ सुरेताश्चसुदुघाच ॥ शंभूश्चमयोभूश्च ॥ ऊर्जस्वतीचपयस्वतीच ॥ रेतोधाश्चरेतोभृच्च ॥ द्यावापृथिवीइहश्रुतामिहसोमस्यमत्सतां ॥ प्रेमांदेवीदेवहूतिमवतांदेव्याधिया॥ प्रेदंब्रह्मप्रेदंक्षत्रं ॥ प्रेमंसुन्वंतंयजमानमवतां ॥ चित्रेचित्राभिरूतिभिः॥श्रुतांब्रह्माण्यावसागमतां ॥१५॥५॥ऋभवोदेवाःसोमस्यमत्सन् ॥ विष्ट्वीस्वपसः ॥ कर्मणासुहस्ताः ॥ धन्याधनिष्ठाः॥शम्याशमिष्ठाः॥ शच्याशचिष्ठाः ॥येधेनुंविश्वजुवंविश्वरूपामरक्षन् ॥ अरक्षन्धेनुमभवद्विश्वरूपी ॥ अयुंजतहरीअयुर्देवाँउप॥अबुध्नन्त्संकनीनामदंतः॥संवत्सरेस्वपसोयज्ञियंभागमायन् ॥ ऋभवोदेवाइहश्रवन्निहसोमस्यमत्सन् ॥ प्रेमांदेवादेवहूतिमवंतुदेव्याधिया ॥ प्रेदंब्रह्मप्रेदंक्षत्रं ॥ प्रेमंसुन्वंतंयजमानमवंतु ॥ ॥ चित्राश्चित्राभिरूतिभिः॥ श्रवद्ब्रह्माण्यावसागमन् ॥१७ ॥६॥ विश्वेदेवाःसोमस्यमत्सन् ॥ विश्वेवैश्वानराः ॥ विश्वेहिविश्वमहसः ॥ महिमहांतः॥ तक्वान्नानेमातिथीवानः॥ अस्काःपचतवाहसः ॥ वातात्मानोअग्निदूताः ॥ येद्यांचपृथिवींचातस्थुः ॥ अपश्चस्वश्च ॥ ब्रह्मचक्षत्रंच ॥ बर्हिश्चवेदिंच ॥ यज्ञंचोरुचांतरिक्षं ॥ येस्थत्रयएकादशाः॥ त्रयश्चत्रिंशच्च ॥ त्रयश्चत्रीचशता ॥ त्रयश्चत्रीचसहस्रा ॥ तावंतोभिषाचः ॥ तावंतोरातिषाचः ॥ तावतीःपत्नीः ॥ तावतीर्ग्नाः ॥ तावंतउदरणे ॥ तावंतोनिवेशने ॥ अतोवादेवाभूयांसःस्थ ॥ मावोदेवाअपिशसामापरिशसाद्दक्षि॥ विश्वेदेवाइहश्रवन्निहसोमस्यमत्सन्॥प्रेमांदेवादेवहूतिमवंतुदेव्याधिया॥ प्रेदंब्रह्मप्रेदंक्षत्रं ॥ प्रे

मंसुन्वन्तंयजमानमवंतु॥चित्राश्चित्राभिरुतिभिः॥ श्रवद्ब्रह्माण्यावसाग मन् ॥३०॥७॥ अग्निर्वैश्वानरःसोमस्यमत्सत्॥विश्वेषांदेवानांसमित्॥ अजस्रंदैव्यंज्योतिः॥योविड्भ्योमानुषीभ्योअदीदेत्॥ द्युपुपूर्वासुदिद्यु तानः ॥ अजरउषसामनीके॥आयोद्यांभात्यांपृथिवीम्॥ओर्वंतरिक्षं॥ ज्योतिषायज्ञायशर्मयंसत्॥ अग्निर्वैश्वानरइहश्रवदिहसोमस्यमत्सत्॥ प्रेमांदेवोदेवहूतिमवतुदेव्याधिया ॥ प्रेदंब्रह्मप्रेदंक्षत्रं ॥ प्रेमंसुन्वंतंयज मानमवतु ॥ चित्रश्चित्राभिरूतिभिः॥श्रवद्ब्रह्माण्यावसागमत् ॥१५॥ ॥ ८ ॥ मरुतोदेवाःसोमस्यमत्सन्॥सुष्टुभःस्वर्काः ॥अर्कस्तुभोबृहद्वय सः ॥ शूराअनाधृष्टरथाः ॥ त्वेषासःपृश्निमातरः ॥ शुभ्राहिरण्यखा-दयः ॥ तवसोभंददिष्टयः ॥ नभस्यावर्षनिर्णिजः ॥ मरुतोदेवाइहश्र-वन्निहसोमस्यमत्सन् ॥ प्रेमांदेवादेवहूतिमवंतुदेव्याधिया ॥ प्रेदंब्र-ह्मप्रेदंक्षत्रं ॥ प्रेमंसुन्वंतंयजमानमवंतु ॥ चित्राश्चित्राभिरूतिभिः ॥ श्रवद्ब्रह्माण्यावसागमन् ॥ १४ ॥ ९ ॥ अग्निर्जातवेदाःसोमस्यमत्सत् ॥ स्वनीकश्चित्रभानुः ॥ अप्रोषिवान्गृहपतिः ॥ तिरस्तमांसिदर्शतः ॥ घृताहवनईड्यः॥ बह्वुलवर्मास्तृतयज्वा ॥ प्रतीत्याशत्रूनूजेतापराजि-तः ॥ अग्नेजातवेदोभिद्युम्नमभिसहआयच्छस्व ॥ तुशोअप्तुशः ॥ समेद्धारंस्तोतारमंहसस्पाहि ॥ अग्निर्जातवेदाइहश्रवदिहसोमस्यम-त्सत् ॥ प्रेमांदेवोदेवहूतिमवतुदेव्याधिया ॥ प्रेदंब्रह्मप्रेदंक्षत्रं ॥ प्रेमं-सुन्वंतंयजमानमवतु ॥ चित्रश्चित्राभिरूतिभिः ॥ श्रवद्ब्रह्माण्यावसा-गमत् ॥१६॥१० ॥ अस्यमदेजरितरिंद्रःसोमस्यमत्सत् ॥ अस्यमदे-जरितरिंद्रोहिमहन् ॥ अस्यमदेजरितरिंद्रोवृत्रमहन् ॥ अस्यमदेज-रितरिंद्रोपांवेगमैरयत् ॥ अस्यमदेजरितरिंद्रोजिन्वदजुवोपिन्वदपितः ॥ अस्यमदेजरितरिंद्रउदार्यंवर्णमतिरदवदासीह्विशोअस्तभ्नात् ॥ अ-स्यमदेजरितरिंद्रउद्यामस्तभ्नादप्रथयत्पृथिवीं ॥ अस्यमदेजरितरिंद्रो-

दिविसूर्यमैरयद्यंतरिक्षमतिरत्॥ अस्यमदेजरितरिंद्रःसमुद्रंप्रकुपितमरण्णात् ॥ अस्यमदेजरितरिंद्रऋष्याँइवपंफणतःपर्वतान्प्रकुपिताँअरण्णात्॥ अस्यमदेजरितरिंद्रइहश्रवदिहसोमस्यमत्सत् ॥ प्रेमांदेवोदेवहूतिमवतुदेव्याधिया ॥ प्रेदंब्रह्मप्रेदंक्षत्रं॥प्रेमंसुन्वंतंयजमानमवतु॥ चित्रश्चित्राभिरूतिभिः ॥ श्रवद्ब्रह्माण्यावसागमत्॥ १६ ॥ ११ ॥ अग्निर्द्वादश ॥ इंद्रोमरुत्वानिंद्रोदेवःसवितादेवःपृथग्विंशतिः ॥ द्यावापृथिवीपंचदश ॥ ऋभवोदेवाःसप्तदश ॥ विश्वेदेवास्त्रिंशत् ॥ अग्निर्वैश्वानरःपंचदश ॥ मरुतोदेवाश्चतुर्दश ॥ अग्निर्जातवेदाअस्यमदेपृथक्षोळश ॥ ॥ इतिनिविदध्यायः ॥

अथकुंतापाध्यायः

ॐम् अथनाराशंस्यः ॥ इदंजनाउपश्रुतनराशंसस्तविष्यते ॥ षष्टिंसहस्रानवतिंचकौरमआरुशमेषुदद्महे ॥ उष्ट्रायस्यप्रवाहणोवधूमंतोद्विर्दश ॥ वर्ष्मारथस्यनिजिहीळतेदिवईषमाणाउपस्पृशः ॥ एषइयायमामहेशतंनिष्कान्दशस्रजः ॥ त्रीणिशतान्यर्वतांसहस्रादशगोनां ॥ ३ ॥ ॥ इतितिस्रोनाराशंस्यः ॥

अथरैभ्यः

वच्यस्वरेभवच्यस्वदृक्षेनपक्वेशकुनः ॥ नष्टेजिह्वाचर्चरीतिक्षुरोनभुरिजोरिव ॥ प्ररेभासोमनीषयावृषागावइवेरते ॥ अमोतपुत्रकाएषाममोतकाइवासते ॥ प्ररेभधियंभरस्वगोविदंवसुविदं ॥ देवत्रेमांवाचंश्रीणीहीषुर्नवीरमस्तारं ॥ ३ ॥ इतितिस्रोरैभ्यः ॥

अथपारिक्षित्यः

राज्ञोविश्वजनीनस्ययोदेवोमर्त्याँअति ॥ वैश्वानरस्यसुष्टुतिमा

सुनोतापरिक्षितिः ॥ परिक्छिन्नः क्षेममकरत्तमासुनुमासरं ॥ मशाय- न्कुर्वन्कौरव्यःपतिर्वदतिजायया ॥ कतरत्तआहराणिदधिमंथांपरिस्रुतां ॥ जायापतिंविपृच्छतिराष्ट्रेराज्ञःपरिक्षितः ॥ अभीवस्वःप्रजिहातेयवःपक्वःपथोबिलं । जनःसभद्रमेधत्तराष्ट्रेराज्ञःपरिक्षितः ॥ इतिचतस्रःपारिक्षित्यः ॥

अथकारव्यः

इंद्रःकारुमबूबुधदुत्तिष्ठविचराजनं ॥ ममेदुग्रस्यचर्कृधिसर्वाइत्तेपृणादरिः ॥ इहगावःप्रजायध्वमिहाश्वाइहपूरुषाः ॥ इहोसहस्रदक्षिणोवीरस्त्रातानिषीदतु ॥ नेमाइंद्रगावोरिषन्मोआसांगोपतीरिषत् ॥ मासामामित्रयुर्जनइंद्रमास्तेनईशत ॥ उपनोनरएमसिसूक्तेनवचसावयंभद्रेणवचसावयं ॥ वनोदधिध्वंनोअंगिरोनरिष्येमकदाचन ॥ ४ ॥ इतिचतस्रःकारव्यः ॥

अथदिशांकॢप्तयः

यःसभेयोविदथ्यःसुत्वायज्वाचपूरुषः ॥ सूर्यंचाभूरिशादसंतंदेवाःप्रागकल्पयन् ॥ योजाम्याअप्रत्तमदद्यःसखायन्निनित्सति ॥ ज्येष्ठोयदप्रचेतास्तदाहुरधरागिति ॥ यद्भद्रस्यपुरुषस्यपुत्रोभवतिदाधृषिः ॥ तद्विप्रोअब्रवीदुदग्गंधर्वःकाम्यंवचः ॥ यश्चपणिरभुजिष्योयश्चरेवाँअदाशुरिः ॥ धीराणांशश्वतामहंतदपागितिशुश्रुम ॥ येचदेवाअयजंताथोयेचपराददिः ॥ सूर्योदिवमिवगत्वामघवानोविरप्शते ॥ ५ ॥ इतिपंचदिशांकॢप्तयः ॥

अथजनकल्पः

योनाक्ताक्षोअनभ्यक्तोमणिवोअहिरण्यवः ॥ अब्रह्माब्रह्मणस्पुत्रस्तोताकल्पेषुसंमितः ॥ यआक्ताक्षःस्वभ्यक्तःसुमणिःसुहिरण्य

वः ॥ सुब्रह्माब्रह्मणस्पुत्रस्तोताकल्पेषुसंमितः ॥ अप्रपाणाचयेशांतारेवाँअप्रददिश्वयः ॥ अयश्वाकन्याकल्याणीतोताकल्पेषुसंमितः ॥ सुप्रपाणाचयेशांतारेवान्सुप्रददिश्वयः ॥ सुयश्वाकन्याकल्याणीतोताकल्पेषुसंमितः ॥ वावाताचमहिष्यंनस्ताचयुधिंगमः ॥ अनाशुरश्व आयामीतोताकल्पेषुसंमितः ॥ परिवृक्ताचमहिषीविश्वस्त्याचयुधिंगमः ॥ स्वाशुरश्वआयामीतोताकल्पेषुसंमितः ॥ ॥ इतिषड्जनकल्पाः ॥

अथेन्द्रगाथाः

यदिंद्रोदाशराज्ञेमानुषंव्यगाहथाः ॥ विरूपःसर्वस्माआसीत्सहयक्षायवंचते ॥ त्वंविषाक्षंमघवन्नम्रंपर्याकरोरभि ॥ त्वंरौहिणंव्यास्यस्त्वंवृत्रस्याभिनच्छिरः ॥ यःपर्वतान्व्यदधाद्योअपोव्यगाहथाः ॥ योवृत्रोवृत्रहन्नहंस्तस्माइंद्रनमोस्तुते ॥ प्रष्टिंधावंतंहर्योरौच्चैःश्रवसमब्रवं॥ स्वस्त्यश्वजैत्रायेंद्रमावहसुस्रजं ॥ यत्वाश्वेतोच्चैःश्रवसंहर्योयुंजंतिदक्षिणं ॥ मूर्धानमश्वंदेवानांबिभ्रदिंद्रंमहीयसे ॥ इतिपंचेंद्रगाथाः ॥

अथैतशप्रलापाः

एताअश्वाआप्लवंते ॥ प्रतीपंप्रातिसत्वनं ॥ तासामेकाहरिक्निका ॥ हरिक्निकेकिमिच्छसि ॥ साधुंपुत्रंहिरण्ययं ॥ क्वाहतंपरास्यः ॥ यत्रामूस्तिस्रःशिंशपाः ॥ परित्रयःपृदाकवः ॥ शृंगंधमंतआसते॥ अयंमहांतेअवहि ॥ १० ॥ सइत्थकंसएवकं ॥ सघाघतेसघागमे ॥ गोमीघमोमिनीरभि ॥ पुमान्भूम्नेनिनित्सति ॥ बद्धबथोइति ॥ बद्धोअथोइति ॥ अजकोरकोविका ॥ अश्वस्यवालोगोशफः ॥ केशिनीश्येनीएनीवा ॥ अनामयोपजिह्विका ॥ २० ॥ कोअंबकुलि

मायुनि ॥ कोअर्जुन्याःपयः ॥ कोअसिक्न्याःपयः ॥ एतंपृच्छकुहं पृच्छ ॥ कुहाकंपक्ककंपृच्छ ॥ यआयंतिश्वभिष्कुभिः ॥ अकुभ्यंतःकुभायवः ॥ आमणकोमणत्थकः ॥ देवत्तःप्रतिहूर्यः ॥ पिनष्टि पतिकाहविः ॥ ३० ॥ प्रबुद्बुदोमथायति ॥ शुंगउत्पत ॥ मात्वाबिसखानाविदन् ॥ वशायाःपुत्रमायांतं ॥ इराचेंद्रममंदत ॥ इयंनियंनिति ॥ अथोइयंनिति ॥ अथोज्यायस्तरोभुवत् ॥ इयंयकाशलाकका ॥ आमिणोतिनिभज्यते ॥ ४० ॥ तस्याअनुनिभंजनं ॥ वरुणोयातिबभ्रुभिः ॥ शतंबभ्रोरभीशवः ॥ शतंकशाहिरण्ययीः ॥ शतंरथाहिरण्ययाः ॥ आहलकुःशवर्तकुः ॥ आयवनेनतेजनिः ॥ शफेनपीवओहति ॥ वनिष्ठुनोपनृत्यति ॥ इयंमह्यमदुरिति ॥ ५० ॥ तेवृक्षाःसहतिष्ठंति ॥ पाकबलिःशकबलिः ॥ अश्वत्थःखदिरोधवः ॥ अरदुःपरमःशये ॥ हतइवपापपूरुषः ॥ अदोहमितपीयूषकं ॥ द्वौचहस्तिनौदती ॥ अध्यर्धंचपरस्वतः ॥ आदलाबुकमेककं ॥ अलाबुकंनिखातकं ॥ ६० ॥ कर्करिकोनिखातकः ॥ तद्वातउन्मथाइति ॥ कुलायंकरवांइति ॥ उग्रंवलिशदाततं ॥ नबलिशनदाततं ॥ कएषां कर्करींरिखत् ॥ कएषां दुंदुभिंहनत् ॥ यदींहनत्कथंहनत् ॥ देवींहनत्कथंहनत् ॥ पर्याकारंपुनःपुनः ॥ ७० ॥ इतिसप्ततिपदान्यैतशप्रलापाः ॥

अथप्रवह्लिकाः

विततौकिरणौद्वौतावापिनष्टिपूरुषः ॥ नवैकुमारितत्तथायथाकुमारिमन्यसे ॥ मातुष्टेकिरणौद्वौनीवीतःपुरुषादृते ॥ नवैकुमारितत्तथा यथाकुमारिमन्यसे ॥ निगृह्यकर्तकौद्वौनिरायच्छसिमध्यमां ॥ नवैकुमारितत्तथायथाकुमारिमन्यसे ॥ उत्तानायैशयानायैतिष्ठन्नेवावगूहसि ॥

नवैकुमारितत्तथायथाकुमारिमन्यसे ॥ श्लक्ष्णायांश्लक्ष्णिकायांश्लक्ष्णमेवावगूहसि ॥ नवैकुमारितत्तथायथाकुमारिमन्यसे ॥ अवश्लक्ष्णमवश्रशदंतर्लोमवतिह्रदे ॥ नवैकुमारितत्तथायथाकुमारिमन्यसे ॥ इतिषट्प्रवह्लिकाः ॥

अथाजिज्ञासेन्याः

इहेत्थप्रागपागुदगधराक् ॥ अरात्वाउदभंथते ॥ इहेत्थप्रागपागुदगधराक् ॥ वत्साःपुषंतआसते ॥ इहेत्थप्रागपागुदगधराक् ॥ स्वीपुत्सीलिलीशये ॥ इहेत्थप्रागपागुदगधराक् ॥ स्थालीपाकोविलीयते ॥ इतिचतस्रआजिज्ञासेन्याः ॥

अथप्रतिराध्यः

भुगित्यभिगतः ॥ शरित्यभिष्ठितः ॥ फलित्यपक्रांतः ॥ इतितिस्रःप्रतिराध्यः ॥

अथातिवादः

वीमेदेवाअक्रंसताध्वर्योक्षिप्रंप्रचर ॥ सुशस्तिरिद्धवामस्यतिप्राक्षिवदसोमहै ॥ इत्यतिवादः ॥

अथदेवनीथाः

आदित्याहजरितरंगिरोभ्योदक्षिणामनयन् ॥ तांहजरितर्नप्रत्यायन् ॥ तामुहजरितःप्रत्यायन् ॥ तांहजरितर्नप्रत्यगृभ्णन् ॥ तामुहजरितःप्रत्यगृभ्णन् ॥ अहानेतसंनविचेतनानि ॥ जज्ञानेतसन्नपुरोगवासः ॥ उतश्वेतआशुपत्वा ॥ उतोपद्याभिर्जविष्ठः ॥ उतेमाशुमानंपिपर्ति ॥ आदित्यारुद्रावसवस्त्वेळते ॥ इदंराधःप्रतिगृभ्णीह्यंगिरः ॥ इदंराधोबृहत्पृथु ॥ देवाददत्वावरं ॥ तद्वोअस्तुसुचेतनं ॥ युष्मेअस्तुदिवेदिवे ॥ प्रत्येवगृभायत ॥ इतिसप्तदशपदानिदेवनीथाः ॥

अथभूतेच्छदः

त्वमिंद्रशर्मरिणाहव्यंपरावतेभ्यः ॥ विप्रायस्तुवतेवसूनिजुरश्रव सेमहे ॥ त्वमिंद्रकपोतायच्छिन्नपक्षायवंचते॥श्यामाकंपक्वंपीलुचवार स्माअकृणोर्बहु ॥ अरंगरोवावदीतित्रेधाबद्धोवरत्रया ॥ इरामुहप्रशं सत्वनिराममपबाधतां ॥ इतितिस्रोभूतेच्छदः ॥

अथाहनस्याः

यदस्या अंहुभेद्याःकृधुस्थूरमुपातसत् ॥ मुष्काविदस्याएजतोगो शफेशकुलाविव ॥ यदास्थूरेणपससाअनूमुष्काउपावधीत् ॥ विष्वंचा वस्याअर्दतेसिकतास्विवगर्दभः ॥ यदल्पिकास्वल्पिकाकर्कंधुकेवपच्य ते ॥ वासंतिकमिवतेजनोयभ्यमानावितन्वते ॥ यद्देवासोललामगुंप्र पिष्टीपिनमाविषुः ॥ सक्थ्नादेदृश्यतेनरःसक्थ्यःसाक्षीवगोयथा ॥ म हाणग्न्युपब्रूतेअश्वस्यावेशितंपसः ॥ ईदृक्फलस्यवृक्षस्यशूर्पंशूर्पंभजे महि ॥ महाणग्न्यदृसंहिसोकंददस्तमासरत् ॥ शकुकाननाशकामश- कंसक्थ्युद्यमत् ॥ महाणग्न्युलूखलमतिक्रामंत्यब्रवीत् ॥ यथैवतेवन- स्पतेपिप्नंतितथैवमे ॥ महान्वैभद्रोबिल्वोमहान्पक्कउदुंबरः ॥ महाँ- अभिज्ञुबाधतेमहतःसाधुखोदनं ॥ इत्यष्टावाहनस्याः ॥ इतिकुंतापा- ध्यायःसमाप्तः ॥

॥ अथपुरोरुक् ॥

वायुरग्रेगायज्ञप्रीःसाकंगन्मनसायज्ञं ॥ शिवोनियुद्भिःशिवाभिः ॥१॥ हिरण्यवर्तनीनरादेवापतीअभिष्टये ॥ वायुश्चेंद्रश्चसुमुखः॥२॥ काव्याराजानाक्रत्वादक्षस्यदुरोणे ॥ रिशादसासधस्थआ ॥३॥ दैव्या- अध्वर्यूआगतंरथेनसूर्यत्वचा ॥ मध्वायज्ञंसमंजाथे ॥ ४ ॥ इंद्रउक्थे भिर्मंदिष्ठोवाजानांचवाजपतिः ॥ हरिवांसुतानांसखा ॥ ५ ॥ विश्वा

न्देवान्हवामहेस्मिन्यज्ञेसुपेशसः ॥ तइमंयज्ञमागमंदेवासोदेव्याधिया ॥ ६ ॥ जुषाणाअध्वरेसदोयेयज्ञस्यतनूकृतः ॥ विश्वआसोमपीतये ॥ ७ ॥ वाचमहंदेवींवाचास्मिन्यज्ञेसुपेशसा ॥ सरस्वतींहवामहे॥८॥ इत्यष्टौपुरोरुक् ॥

अथप्रैषाः

होतायक्षदग्निंसमिधासुषमिधासमिद्धंनाभापृथिव्याःसंगथेवामस्य ॥ वर्ष्मन्दिवइळस्पदेवेत्वाज्यस्यहोतर्यज ॥ १ ॥ होतायक्षत्तनूनपातमदितेर्गर्भंभुवनस्यगोपां ॥ मध्वाद्यदेवोदेवेभ्योदेवयानान्पथोअनक्तुवेत्वाज्यस्यहोतर्यज ॥ २ ॥ होतायक्षन्नराशंसंनृशस्तंनॄँःप्रणेत्रं ॥ गोभिर्वपावान्स्याद्वीरैःशक्तीवान्रथैःप्रथमयावाहिरण्यैश्चंद्रीवेत्वाज्यस्यहोतर्यज ॥ ३ ॥ होतायक्षदग्निमीळईळितोदेवोदेवाँऽआवक्षद्दूतोहव्यवाळमूरः ॥ उपेमंयज्ञमुपेमांदेवोदेवहूतिमवतुवेत्वाज्यस्यहोतर्यज ॥ ४ ॥ होतायक्षद्बर्हिःसुष्टरीमोर्णम्रदाअस्मिन्यज्ञेविचप्रचप्रथतांस्वासस्थंदेवेभ्यः ॥ एमेनदद्यवसवोरुद्राआदित्याःसदंतुप्रियमिंद्रस्यास्तुवेत्वाज्यस्यहोतर्यज ॥ ५ ॥ होतायक्षद्दुरऋष्वाःकवष्योकोषधावनीरुद्रातानाभिर्जिहतांविपक्षोभिःश्रयतां ॥ सुप्रायणाअस्मिन्यज्ञेविश्रयंतामृतावृधोव्यंत्वाज्यस्यहोतर्यज ॥ ६ ॥ होतायक्षदुषासानक्ताबृहतीसुपेशसानॄँःपतिभ्योयोनिंकृण्वाने ॥ संस्मयमानेइंद्रेणदेवैरेदंबर्हिःसीदतांवीतामाज्यस्यहोतर्यज ॥ ७ ॥ होतायक्षद्दैव्याहोतारामंद्रापोताराकवीप्रचेतसा ॥ स्विष्टमद्यान्यःकरदिषास्वभिगूर्तमन्यऊर्जासतवसेमंयज्ञंदिविदेवेषुधत्तांवीतामाज्यस्यहोतर्यज॥८॥होतायक्षत्तिस्रोदेवीरपसामपस्तमाअच्छिद्रमद्येदमपस्तन्वतां॥ देवेभ्योदेवीर्देवमपोव्यंत्वाज्यस्यहोतर्यज ॥ ९ ॥ होतायक्षत्त्वष्टारमचिष्टमपाकंरे

तोधांविश्रवसंयशोधां ॥ पुरुरूपमकामकर्शनंसुपोषःपोषैःस्यात्सुवी शेवीरैर्वैत्वाज्यस्यहोतर्यज ॥ १० ॥ होतायक्षद्वनस्पतिमुपावस्रक्षद्धियोजोष्टारंशशमंनरः ॥ स्वदात्स्वधितिर्ऋतुथाद्यदेवोदेवेभ्योहव्यवाड्वेत्वाज्यस्यहोतर्यज ॥११॥ अजैदग्निरसनद्वाजंनिदेवोदेवेभ्योहव्य वाट्प्रांजोभिर्हिन्वानोधेनाभिःकल्पमानोयज्ञस्यायुःप्रतिरन्नुपप्रेष्यहो तर्हव्यादेवेभ्यः ॥ १२ ॥ होतायक्षदग्निस्वाहाज्यस्यस्वाहामेदसःस्वा हास्तोकानांस्वाहास्वाहाकृतीनांस्वाहाहव्यसूक्तीनां ॥ स्वाहादेवाआ ज्यपाजुषाणाअग्नआज्यस्यव्यंतुहोतर्यज ॥१३॥ इतिप्रयाजप्रैषः ॥ होतायक्षदग्निमाज्यस्यजुषतांहविर्होतर्यज ॥ १४ ॥ होतायक्षत्सो ममाज्यस्यजुषतांहविर्होतर्यज ॥ १५ ॥ होतायक्षदग्नीषोमौछा गस्यवपायामेदसोजुषेतांहविर्होतर्यज ॥ १६ ॥ होतायक्षदग्नीषोमौ पुरोळाशस्यजुषेतांहविर्होतर्यज ॥ १७ ॥ होतायक्षदग्निंपुरोळाशस्य जुषतांहविर्होतर्यज ॥ १८ ॥ होतायक्षदग्नीषोमौछागस्यहविषआत्तामद्यमध्यतोमेदउद्भृतंपुराद्वेषोभ्यःपुरापौरुषेय्याग्रृभः ॥ घस्तान्नूनं घासेअज्राणांयवसप्रथमानांसुमत्क्षराणांशतरुद्रियाणामग्निष्वात्तानां पीवोपवसनानांपार्श्वतःश्रोणितःशितामतउत्सादतोंगादंगादवत्तानांक रतएवाग्नीषोमौजुषेतांहविर्होतर्यज ॥ १९ ॥ देवेभ्योवनस्पतेहवींषिहिरण्यपर्णप्रदिवस्तेअर्थं ॥ प्रदक्षिणिद्रशनयानियूयऋतस्यवक्षिपथिभीरजिष्ठैः ॥ होतायक्षद्वनस्पतिमभिहिपिष्टतमयारभिष्टयारशनयाधित॥यत्राग्नेराज्यस्यहविषःप्रियाधामानियत्रसोमस्याज्यस्य हविषःप्रियाधामानियत्राग्नीषोमयोश्छागस्यहविषःप्रियाधामानियत्रवनस्पतेःप्रियापाथांसियत्रदेवानामाज्यपानांप्रियाधामानियत्राग्ने-, र्होतुःप्रियाधामानितत्रैतंप्रस्तुत्येवोपस्तुत्येवोपावस्रक्षद्रभीयांसमिवकृत्वीकरदेवंदेवोवनस्पतिर्जुषतांहविर्होतर्यज ॥ २०॥ वनस्पतेरशनया-

निर्यूयपिष्टतमयावयुनानिविद्वान् ॥ वहदेवत्रादिधिषोहवींषिप्रचदा-
तारममृतेषुवोचः॥होतायक्षदग्निंस्विष्टकृतमयाळग्निरग्नेराज्यस्यहविषः
प्रियाधामान्ययाट्सोमस्याज्यस्यहविषःप्रियाधामान्ययाळग्नीषोम-
योश्छागस्यहविषःप्रियाधामान्ययाड्वनस्पतेः प्रियापाथांस्ययाड्देवा-
नामाज्यपानांप्रियाधामानियक्षदग्नेर्होतुःप्रियाधामानियक्षत्स्वंमहि-
मानमायजतामेज्याइषःकृणोतुसोअध्वराजातवेदाजुषतांहविर्होतर्य-
ज ॥२१॥ इतिपाशुकप्रैषाः॥ अथानुयाजप्रैषाः ॥ देवंबर्हिःसुदेवंदेवैः
स्यात्सुवीरंवीरैर्वस्तोर्वृज्येताक्तोःप्रभ्रियेतात्यन्यान्रायाबर्हिष्मतोमदे-
मवसुवनेवसुधेयस्यवेतुयज ॥२२ ॥ देवीर्द्वारःसंघातेविड्वीर्यामंछिथि-
राध्रुवादेवहूतौवत्सईमेनास्तरुणआमिमीयात्कुमारोवावनजातौमैना-
अर्वारेणुककाटःपृणग्वसुवनेवसुधेयस्यव्यंतुयज ॥२३॥ देवीउषासा-
नक्ताद्यास्मिन्यज्ञेप्रयत्यह्वेतामपिनूनंदेवीर्विशःप्रायासिष्टांसुप्रीतेसुधि-
तेवसुवनेवसुधेयस्यवीतांयज ॥ २४ ॥ देवीजोष्ट्रीवसुधितीययोरन्या-
घाद्वेषांसियुयवदान्यावक्षद्वसुवार्याणियजमानायवसुवनेवसुधेयस्य
वीतांयज॥२५॥देवीऊर्जाहुतीइषमूर्जमन्यावक्षत्सग्धिंसपीतिमन्यान
वेनपूर्वंदयमानास्यामपुराणेननवंतामूर्जमूर्जाहुतीऊर्जयमानेअधातां
वसुवनेवसुधेयस्यवीतांयज ॥ २६ ॥ देवादैव्याहोतारापोतारानेष्टा-
राहताघशंसावाभरद्वसूवसुवनेवसुधेयस्यवीतांयज ॥ २७ ॥ देवीस्ति-
स्रस्तिस्रोदेवीरिळासरस्वतीभारतीद्यांभारत्यादित्यैरस्पृक्षत्सरस्वतीमं
रुद्रैर्यज्ञमावीदिहैवेळयावसुमत्यासधमादंमदेमवसुवनेवसुधेयस्यव्यंतु
यज ॥ २८ ॥ देवोनराशंसस्त्रिशीर्षाषळक्षःशतमिदेनंशितिपृष्ठाआद-
धतिसहस्रमींप्रवहंतिमित्रावरुणेदस्युहोत्रमर्हतोबृहस्पतिस्तोत्रमश्वि-
नाध्वर्यवंवसुवनेवसुधेयस्यवेतुयज ॥ २९ ॥ देवोवनस्पतिर्वर्षप्रावा-

६

घृतनिर्णिक्द्यामग्रेणास्पृक्षदांतरिक्षंमध्येनाप्राःपृथिवीमपरेणादृंहीद्व-सुवनेवसुधेयस्यवेतुयज॥३०॥देवंबर्हिर्वारितीनांनिधेधासिप्रच्युतीनामप्रच्युतंनिकामधरणंपुरुस्पार्हंयशस्विदेनाबर्हिन्याबर्हीष्यभिष्याम-वसुवनेवसुधेयस्यवेतुयज ॥३१॥ देवोअग्निःस्विष्टकृत्सुद्रविणामंद्रःकविःसत्यमन्मायजीहोताहोतुर्होतुरायजीयानग्नेयांदेवानयाड्याँअपिप्रेयेंतेहोत्रेअमत्सततांससनुर्षांहोत्रांदेवंगमांदिविदेवेषुयज्ञमेरयेमंस्विष्ट-कृच्चाग्नेहोताभूर्वसुवनेवसुधेयस्यनमोवाकेवीहियज ॥ ३२ ॥ अथ-सूक्तवाकप्रैषः ॥ अग्निमद्यहोतारमवृणीतायंयजमानःपचन्पक्तीःपचन्पुरोळाशंगृह्णन्नग्नयआज्यंगृह्णन्सोमायाज्यंबध्नन्नग्नीषोमाभ्यांछागंसूपस्थाअद्यदेवोवनस्पतिरभवदग्नयआज्येनसोमायाज्येनाग्नीषोमाभ्यांछागेनाद्यस्तंतंमेदस्तःप्रतिपचताग्रभीष्टामवीवृधेतांपुरोळाशेन-त्वामद्यर्षआर्षेय ऋषीणांनपादवृणीतायंयजमानोबहुभ्यआसंगथेभ्यः॥एषमेदेवेषुवार्यायक्ष्यतइतितायादेवादेवदानान्यदुस्तान्यस्माआच-शास्वाचगुरस्वेषितश्चहोतरसिभद्रवाच्यायप्रेषितोमानुषःसूक्तवाकाथसूक्ताब्रू३हि ॥ ३३ ॥ अथसुत्यायांसवनीयप्रैषाः ॥ होतायक्षदग्निंछागस्यवपायामेदसोजुषतांहविर्होतर्यज ॥ ३४ ॥ होतायक्षदिंद्रंहरिवाँइंद्रोधानाअत्तुपूषण्वान्करंभंसरस्वतीवान्भारतीवा-न्परिवापइंद्रस्यापूपः ॥ मित्रावरुणयोःपयस्याप्रातःप्रातःसावस्यपुरोळाशाँइंद्रःप्रस्थितांजुषाणोवेतुहोतर्यज ॥३५॥ होतायक्षदग्निंपुरोळाशानांजुषतांहविर्होतर्यज॥३६॥ होतायक्षद्वायुमग्रेगामग्रेयावाण-मग्रेसोमस्यपातारंकरदेवंवायुरावसागमज्जुषतांवेतुपिबतुसोमंहोतर्यज ॥ ३७ ॥ होतायक्षदिंद्रवायूअर्हंताहर्णागव्याभिर्गोमंताश्रियंतांवीरयाशुक्रयाएनयोर्नियुतोगोअग्रावीरोपशाश्वपुरस्त्यास्तासामिहप्रयाणमस्त्विहविमोचनंकरतएवेंद्रवायूजुषेतांवीतांपिबतांसोमंहोतर्यज

॥३८॥होतायक्षन्मित्रावरुणासुक्षत्रारिशादसानिचिन्मिषंतानिचिरानि-
चिर्यांसाक्षणश्चिद्गातुवित्तरानुल्बणेनचक्षसक्तमृतमितिदीध्यानाकरत
एवंमित्रावरुणाजुषेतांवीतांपिबतांसोमंहोतर्यज ॥ ३९ ॥ होतायक्षद
श्विनानासत्यादीद्यग्नीरुद्रवर्तिनीन्यंतरेणचक्रेणवामीरिषऽऊर्जांवहतं
सुवीराःसनुतरेणारुषोबाधेतांमधुकशयेमंयज्ञंयुवानामिमिक्षतांकरतए
वाश्विनाजुषेतांवीतं.पिबतांसोमंहोतर्यज ॥४०॥ होतायक्षदिंद्रंप्रातः
प्रातःसावस्यावांवतोगमदापरावतओरोरंतरिक्षादास्वात्सधस्थादिमेअ-
स्मैशुक्रामधुश्चुतः प्रस्थिताइंद्रायसोमास्तांजुषतांवेतुपिबतुसोमंहोतर्य-
ज ॥ ४१ ॥ होतायक्षदिंद्रंहोत्रात्सजूर्दिवआपृथिव्याऋतुनासोमंपिब
तुहोतर्यज ॥ ४२ ॥ होतायक्षन्मरुतःपोत्रात्सुष्टुभःस्वर्कांऋतुनासोमं
पिबतुपोतर्यज ॥ ४३ ॥ होतायक्षद्ग्रावोनेष्ट्रात्त्वष्टासुजनिमासजूर्देवा-
नांपत्नीभिर्ऋतुनासोमंपिबतुनेष्टर्यज ॥ ४४ ॥ होतायक्षदग्निमाग्नीध्रा
दृतुनासोमंपिबत्वग्नीद्यज ॥ ४५ ॥ होतायक्षदिंद्रोब्रह्माब्राह्मणादृतु
नासोमंपिबतुब्रह्मन्यज ॥ ४६ ॥ होतायक्षन्मित्रावरुणौप्रशास्तारौ
प्रशास्त्रादृतुनासोमंपिबतांप्रशास्तर्यज ॥ ४७ ॥ होतायक्षद्देवंद्रविणो
दांहोत्रादृतुभिःसोमंपिबतुहोतर्यज ॥ ४८ ॥ होतायक्षद्देवंद्रविणोदां
पोत्रादृतुभिःसोमंपिबतुपोतर्यज ॥ ४९ ॥ होतायक्षद्देवंद्रविणोदांनेष्ट्रा
दृतुभिःसोमंपिबतुनेष्टर्यज ॥ ५० ॥ होतायक्षद्देवंद्रविणोदामपाद्धो
त्रादपात्पोत्रादपान्नेष्ट्रात्तुरीयंपात्रममृक्तममर्त्यमिंद्रपानंदेवोद्रविणोदा-
द्राविणोदसःस्वयमायूयाःस्वयमभिगूर्याःस्वयमभिगूर्तयाहोत्रयऋतु
भिःसोमस्यपिबत्वच्छावाकयज ॥५१॥होतायक्षदश्विनाध्वर्यूआध्वर्य
वादृतुनासोमंपिबतामध्वर्यूयजतं ॥ ५२ ॥ होतायक्षदग्निंगृहपतिंगार्ह
पत्यात्सुगृहपतिस्त्वयाग्नेयंसुन्वन्यजमानस्यात्सुगृहपतिस्त्वमनेनसुन्व-
तायजमानेनाग्निर्गृहपतिर्गार्हपत्यादृतुनासोमंपिबतुगृहपतेयज ॥ ५३॥

होतायक्षदग्निंपुरोळाशस्यजुषतांहविर्होतर्यज ॥ ५४ ॥ होतायक्षदिंद्रंहरिवाँइंद्रोधानाअत्तुपूषण्वान्करंभंसरस्वतीवान्भारतीवान्परिवापइंद्रस्यापूपः ॥ माध्यंदिनस्यसवनस्यपुरोळाशाँइंद्रःप्रस्थितान्जुषाणोवेतु होतर्यज ॥ ५५ ॥ होतायक्षदग्निंपुरोळाशानांजुषतांहविर्होतर्यज ॥ ५६ ॥ होतायक्षदिंद्रंमाध्यंदिनस्यसवनस्यनिष्केवल्यस्यभागस्यात्तारंपातारंश्रोतारंहवमागंतारमस्याधियोवितारंसुन्वतोयजमानस्यवृधं ॥ आभाकुक्षीपृणतांवार्त्रघ्नंचमाघोनंचेमेअस्मैशुक्रामधुश्चुतःप्रस्थिताइंद्रायसोमास्तांजुषतांवेतुपिबतुसोमंहोतर्यज ॥ ५७ ॥ होतायक्षदिंद्रंमरुत्वंतमिंद्रोमरुत्वांजुषतांवेतुपिबतुसोमंहोतर्यज ॥ ५८ ॥ होतायक्षदादित्यान्प्रियान्प्रियधाम्नःप्रियव्रतान्महस्वसरस्यपतीनुरोरंतरिक्षस्याध्यक्षान्त्स्वादित्यानवोदधदस्मैसुन्वतेयजमानायकरन्नेवमादित्याजुषंतांमदंतांव्यंतुपिबंतुसोमंहोतर्यज ॥ ५९ ॥ होतायक्षदग्निंछागस्यहविषआददद्यमध्यतोमेदउद्भृतंपुराद्वेषोभ्यःपुरापौरुषेय्यागृभः ॥ घसन्नूनंघासेअज्राणांयवसप्रथमानांसुमत्क्षराणांशतरुद्रियाणामग्निष्वात्तानांपीवोपवसनानांपार्श्वतः श्रोणितःशितामतउत्सादतोंगादंगःदवत्तानांकरदेवाग्निर्जुषतांहविर्होतर्यज ॥ ६० ॥ ( होतायक्षद्वनस्पतिमभिहिपिष्टतमयारभिष्टयारशनयाधित ॥ यत्राग्नेराज्यस्यहविषःप्रियाधामानियत्रसोमस्याज्यस्यहविषःप्रियाधामानियत्राग्नेश्छागस्यहविषःप्रियाधामानियत्रवनस्पतेःप्रियापाथांसियत्रदेवानामाज्यपानांप्रियाधामानियत्राग्नेर्होतुः प्रियाधामानितत्रैतंप्रस्तुत्येवोपस्तुत्येवोपावस्रक्षद्रभीयांसमिवकृत्वीकरदेवंदेवोवनस्पतिर्जुषतांहविर्होतर्यज ॥ होतायक्षदग्निंस्विष्टकृतमयाळग्निरग्नेराज्यस्यहविषः प्रियाधामान्ययाट्सोमस्याज्यस्यहविषःप्रियाधामान्ययाळग्नेश्छागस्यहविषः प्रियाधामान्ययाट्वनस्पतेः प्रियापाथांस्ययाट्देवानामाज्यपानांप्रियाधामानियक्षद-

ग्नेर्होतुःप्रियाधामानियक्षत्स्वंमहिमानमायजतामेज्याऽइषकृणोतुसोऽ-अध्वराजातवेदाजुषतांहविर्होतर्यज )॥ होतायक्षदिंद्रंहरिवांऽइंद्रो-धानाअत्तुपूषण्वान्करंभंसरस्वतीवान्भारतीवान्परिवापइंद्रस्यापूपः ॥ तृतीयस्यसवनस्यपुरोळाशाँइंद्रःप्रस्थितांजुषाणोवेतुहोतर्यज॥ ६१॥ होतायक्षदग्निंपुरोळाशानांजुषतांहविर्होतर्यज ॥ ६२ ॥ होताय-क्षदिंद्रंतृतीयस्यसवनस्यऋभुमतोविभुमतोवाजवतोबृहस्पतिवतोवि-श्वदेव्यावतःसमस्यमदाःप्रातस्तनाअग्मतसंमाध्यंदिनाःसमिदातनास्ते-षांसमुक्षितानांगौरइवप्रगाह्यावृषायस्वायूयाबाहुभ्यामुपयाहिहरि-भ्यांप्रमुथ्याशिप्रेनिष्पृथ्यऋजीषमिमेअस्मैतीव्राआशीर्वंतःप्रस्थिता-इंद्रायसोमास्तांजुषतांवेतुपिबतुसोमंहोतर्यज ॥ ६३ ॥ होताय-क्षद्देवंसवितारंपरामीवांसाविषत्पराघशंसंसुसावित्रमासाविषदस्मैसु-न्वतेयजमानायकरदेवंदेवःसविताजुषतांमदतांवेतुपिबतुसोमंहोतर्यज ॥ ६४ ॥ अग्निमद्यहोतारमवृणीतायंसुन्वन्यजमानःपचन्पक्तीः पचन्पुरोळाशान्गृह्णन्नग्नयऽआज्यंगृह्णंन्त्सोमायाज्यंबध्नन्नग्नयेछागं सुन्वंनिंद्रायसोमंभृंजन्हरिभ्यांधानाःसूपस्थाअद्यदेवोवनस्पतिरभव दग्नयआज्येनसोमायाज्येनाग्नयेछागेनेंद्रायसोमेनहरिभ्यांधानाभिर-घत्तंमेदस्तःप्रतिपचताग्रभीदवीवृधतपुरोळाशैरपादिंद्रःसोमंगवाशिरं-यवाशिरंतीव्रांतंबहुरमध्यमुपोत्थामदाश्चौद्विमदाँआनळवीवृधतांगूषै-स्त्वामद्यर्षआर्षेयऋषीणांनपादवृणीतायंसुन्वन्यजमानोबहुभ्यआ-संगथेभ्यः ॥ एषमेदेवेषुवसुवार्यायक्ष्यतइतितायादेवादेवदानान्य-दुस्तान्यस्माआचशास्स्वाचगुरस्वेषितश्चहोतरसिभद्रवाच्यायप्रेषितो-मानुषःसूक्तवाकायसूक्ताब्रू३हि ॥६५॥ धानासोमानामिन्द्राद्विचपि-बचबब्धांतेहरीधानाउपऋजीषंजिघ्रतामारथचर्षणेसिंचस्वयत्वापृच्छा द्विषन्पत्नीःक्वामीमदथाइत्यस्मिन्त्सुन्वतियजमानेतस्मैकिमरातथाःसुष्ठु

सुत्रीयंयज्ञस्यागुरउद्दचंयद्यद्दचीकमतोतोतत्तथाभूद्धोतर्यज ॥ ६६॥
होतायक्षदश्विनासोमानांतिरोअह्न्यानांत्रिर्वर्तिर्यातंत्रिरिहमादये
थासुतोतुरीयंनासत्यावाजिनायधेनुःसजूरग्नीरोहिदश्वोघृतस्नुःसजूरुषा
अरुणीभिःसजूःसूर्यएतशेनसजोषावश्विनादंसोभिःकरतएवाश्विना-
जुषेतांमदेतांवीतांपिबतांसोमंहोतर्यज ॥ ६७ ॥ होतायक्षदश्विनास-
रस्वतीमिंद्रंसुत्रामाणंसोमानांसुराम्णांजुषतांव्यंतुपिबंतुमदंतुसोमान्सु-
राम्णोहोतर्यज ॥६८॥ होतायक्षत्प्रजापतिंमहिम्नोजुषतांवेतुपिबतु-
सोमंहोतर्यज ॥ ६९ ॥ इतिप्रैषाध्यायःसमाप्तः ॥ ॥ ॥ ७ ॥

इतिपरिशिष्टानि समाप्तानि



